KAVYAMÂLÂ. 14.

# THE PÂRIJÂTAHARAṆACHAMPÛ

OF

S'ESHA S'RÎKṚISHṆA.

EDITED

BY

MAHÂMAHOPÂDHYÂYA PAṆDIT DURGÂPRASÂDA

AND

KÂS'INÂTH PÂṆḌURANG PARAB.

REVISED BY

WÂSUDEV LAXMAṆ S'ÂSTRÎ PAṆS'ÎKAR.

Third Revised Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1926.

*Price 7 Annas.*

काव्यमाला. १४.

महाकविशेषश्रीकृष्णविरचिता

# पारिजातहरणचम्पूः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च संशोधिता,
सा च पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा संस्कृता ।

तृतीयं संस्करणम् ।

स च
मुम्बय्यां
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्रकाशिता ।

१९२६.

मूल्यं ७ आणकाः ।

# काव्यमाला ।

महाकविशेषश्रीकृष्णविरचिता[1]

## पारिजातहरणचम्पूः ।

प्रथम उच्छ्वासः ।

सानन्दं मकरन्दबिन्दुनिकरप्रस्यन्दबन्दीभव-
न्मन्दीभूतमिलिन्दतुन्दिलदलन्मन्दारमन्दादरम् ।
भूयः सौरभलोभसंभ्रमभराद्भृङ्गीभिरङ्गीकृते
भामायाः किल पारिजातकुसुमे जीयात्सतृष्णं मनः ॥ १ ॥

कारुण्यामृतकुल्यास्तुल्याः संसारसागरतरीणाम् ।
स्फुरदधरजनीकल्याः कल्याणं ददतु मङ्गलापाङ्गाः ॥ २ ॥

क्वचित्कनककुण्डलस्तबकमण्डिगण्डस्थलं
क्वचित्कुटिलकुण्डलिप्रकटमण्डनाडम्बरम् ।
क्वचित्कनकसंनिभं क्वचन शारदाभ्रप्रभं
महो महदुपास्महे विहिततााण्डवं शांभवम् ॥ ३ ॥

वन्देऽतिसुन्दरमुकुन्दपदारविन्दं
मन्दाकिनीगलदमन्दमरन्दधारम् ।
इन्दिन्दिरीभवदमन्दपुरंदरादि-
वन्दारुवृन्दमुरुमन्दिरमिन्दिरायाः ॥ ४ ॥

---

१. अयं कविः काश्यां ख्रिस्ताब्दीयषोडशशतकोत्तरभाग आसीदित्याद्युक्तमेव 'कंस-वध'नाटकप्रारम्भे (काव्यमाला. ६.) एतच्चम्पूपुस्तकं त्वेकमेव जयपुरराजगुरुमिथिलाभिजनश्रीनरहरिशर्मणां संग्रहादधिगतम्. तत्तु १७४३ मिते विक्रमाब्दे लिखितं प्रायः शुद्धं मनोहरं चास्ति. प्रारम्भे पत्रत्रयं केवलं जलदोषेण मनाङ्म्लानिमुपगतं वर्तते. अस्य पत्राणि विंशत्यङ्गुलदैर्घ्याणि पञ्चाङ्गुलपरिणाहानि पञ्चचत्वारिंशत्सन्ति. प्रतिपत्रं ६ पङ्क्तयः, प्रतिपङ्क्ति च ४४–५६ अक्षराणि वर्तन्ते.

शारदा शारदाम्भोदविशदा भक्तसारदा ।
सा रदांशुहृतध्वान्ता पायात्सर्वविशारदा ॥ ५ ॥
नलिने पुलिने [च वामलूरे[1] कृतज]न्मा कवितावतारबीजम् ।
अनपार्थवचोमनोभिरामो मम कामोपचयं मुनिस्तनोतु ॥ ६ ॥
सन्तः सन्ति महीतले[ऽतिविपुले] द्वित्राः पवित्राः परं
यत्पादाब्जपरागपांसुकतकं[2] पुंसामभिध्यायताम् ।
नैवाभ्येति सरस्वती[3] विरसतां पारुष्यका[लुष्यजां]
स्फूर्जद्दुर्जयदुर्जनोल्मुकमषीपङ्कं च नास्कन्दति ॥ ७ ॥
सदा सानुशयो नीचपरोपकृतिदीक्षितः ।
सत्समाधिविधानज्ञो निर्ममः किं खलो मुनिः ॥ ८ ॥
अस्तिश्रीमदमन्दमन्दरगिरिग्रावस्थलप्रस्खल-
त्त्वङ्गत्तुङ्गतरङ्गभङ्गिसुभगस्वर्गापगारोधसि ।
श्रीगौरीशपुरीपुरःपरिसरे सत्संपदामास्पदं
स्वःसाम्राज्यविडम्बि ताण्डवपुरं भूमण्डलीमण्डनम् ॥ ९ ॥
तस्मिंश्च
अस्ति स्वस्तिसमस्तनिस्तुलगुणप्रस्तारविस्तारभू-
र्विश्वप्रस्तुतनिस्तुषामलयशःस्तोमप्रशस्तिश्चिरम् ।
ध्वस्तापत्क्षितिपालमस्तकमणिः श्रीवास्तकाख्यो महा-
वंशो वैरिवधूस्तनाद्रिघुसृणालेपारुणास्ताचलः ॥ १० ॥
लोके यं कलिकालकल्मषमषीवर्षप्रसङ्गोल्लल-
ज्जम्बालैः परिपिच्छिले प्रतिपदे धर्मोऽतिखञ्जः स्खलन् ।
दौर्बल्यादवलम्बते किमपरं यो वीरहाराङ्कुरो-
द्गारः(?) स्फारयशःसिताम्बरधरो धीरो धरायां ध्वजः ॥ ११ ॥
तत्रोदारपवित्रचित्रचरिते सद्विश्वविश्वंभरा-
लम्बे शम्बरवैरिघस्मरपरिध्यानादवाप्तोदये ।

१. वल्मीके. २. जलनैर्मल्यासंपादक ओषधिविशेषः. ३. नदीविशेषोऽपि.

संभूताः कति वा नवा नवनवारम्भातिसंभावित-
स्फूर्जच्छारदशीतदीधितिधृताहंकारकीर्तिच्छटाः ॥ १२ ॥

महेश्वरपरः समुन्नयनसिंहरूपोऽभव-
द्गुहामभवकारणं युधि समन्ततो माधवः ।
ततः स्फुरितकीर्तिषु त्रिषु सुगीतगोविन्दतो
वरः किल नरोत्तमो जयति काशिराजानुजः (?) ॥ १३ ॥

अस्ति समस्तसामन्तसीमन्तिनीसीमन्तसिन्दूरपूरसूरास्ताचलः, सकलजलधिवेलावलयितेलावलयतिलकायमाननिखिलभूपालमौलिमालामिलन्मुकुटतटनटन्मणिमरीचिमञ्जरीपुञ्जपिञ्जरितमञ्जुपादाम्बुजः, बहलमिलदलिकुलकलकलाकुलगलदविरलमदजलविलुलितविपुलकपोलपालिशालितुङ्गमातङ्गसंघवितरणगजपतीकृतावनीवनीपकः, प्रचण्डभुजदण्डचण्डिमाकर्णकुण्डलितकोदण्डहिण्डमानकाण्डप्रकाण्डताण्डवाडम्बरोद्दण्डखण्डितारिमुण्डपुण्डरीकखण्डमण्डिताखण्डभूमण्डलः, विलसदनवद्यगद्यपद्याद्यनेकहृद्यविद्याविनोदोद्योतखद्योतीकृतविद्यापतिः, विद्याधरप्रमुखमुखोदीर्यमाणकीर्तिमधुरमदिरामोदमाद्यदमरनागरीस्मरापस्मारचिकित्सापरवशीकृतसुरसमाजः, प्रबलतररिपुनृपतिवंशस्फुरदवन्ध्यविन्ध्याटवीदाहसमिद्धवैश्वानरो नरोत्तमो नाम । यश्च किल कमलोपलालितचरणयुगः, कमलोल्लसद्विलासचतुराननोपश्लोकितालौकिकयशाः, विक्रमाक्रान्तदिक्चक्रपाणिः, यशोदयावर्धितः, नित्यसत्यानुरक्तश्च, अनुशयःस्फीतपीताम्बरः, संमानितविबुधाधिराजः, क्षमोद्वहनधीरताधःकृतभुजगराजः, निकामकामनीयकोपचितसकलकामः, सकलपुरुषार्थसार्थसार्थवाही, पर्यायमात्रान्तरितः पुरुषोत्तमः पुनर्महीमण्डलमवातरत् । यश्च किल प्रथमः प्रथावताम्, द्वितीय इव कनकाचलस्य, तृतीय इवाश्विनेययोः, चतुर्थ इव सप्तार्चिषाम्, पञ्चम इव पुरुषार्थानाम्, षष्ठ इव कुसुमशरशराणाम्, सप्तम इव ऋतूनाम्, अष्टम इव महर्षीणाम्, नवम इव वसूनाम्, दशम इव खण्डप्रवर्तकानाम्, एकादश इव दिगीशानाम्, द्वादश इव

---

१. इलावलयं भूमण्डलम्. २. निखिलमहीतलयाचकः.

रुद्राणाम्, त्रयोदश इवार्काणाम्, चतुर्दश इव रत्नानाम् (?), पञ्चदश इव मनूनाम्। यश्च खलु विश्वविश्वंभराभरणव्यापारभारचिन्तानितान्तपरिश्रान्तस्वान्तस्य भगवतस्त्रिविष्टपसृष्टिपरिक्लिष्टस्य विष्टरश्रवसोऽविश्रान्तविश्रान्तिस्कन्धः, स्कन्द इव भूभृदप्रतिहतशक्तिः, पशुपतिजटाजूट इवोल्लसद्भोगिसंपन्नवसुधारकग्राही, गदाग्रज इवोदग्रभुजबलदलितकुवलयापीडः, कनकगिरिशिखरोद्देश इव विमलकमलोदारमानसः, स्वर्वाहिनीप्रवाह इव विशुद्धपक्षपातपरैः श्रुतिमनोहारिव्याहारैः कृतचारुपदक्रमपरिश्रमैः सदाचरणोपाध्यायैरनेकराजहंसकुलैः सदोपास्यमानः, समानोऽप्यसमानमूर्तिः, समदोऽप्यमदः, सुधर्माधिकृतोऽप्यवधीरितसुधर्माग्रहः, सुविग्रहोऽप्यविग्रहपरः, शशीव कुवलयाह्लादकारी, तुहिनगिरिरिव सर्वमङ्गलोद्भवः, भव इव विभूतिभूषितः, चण्डकर इव कराक्रान्तभूभृन्निवहः, पुरंदर इवानुरञ्जयति भुवनवलयम्। किं बहुना।

शीतांशुर्भुवनं भ्रमन्भ्रमयते यत्कीर्तिलेशाकृतिं
कृत्वा यत्तदमुं विधिः प्रतिनिशं यत्नात्परीक्ष्योज्झति।
दैवैरास्वदितं निशासु कषितं तारामिषात्खण्डितं
दग्धं चण्डमरीचिरोचिषि ततो व्यक्तीभवच्छ्यामिकम्॥ १४॥

अपि च।

कीर्त्या पारं प्रयान्त्या चरममचरमं लम्भितेन प्रतापा-
दब्धीनां शोषवार्ता स्वसदृशि निभृतं केनचित्क्वापि लीनम्।
लक्ष्म्या कोषेऽहिनासौ वचसि च सुधया कामधेन्वा कटाक्षे
कोपे क्ष्वेडेन शश्वद्यशसि [च] शशिना वारिणा चारिनेत्रे॥ १५॥

स च सकलशिष्टोपजुष्टपादपीठः, समधिष्ठितोपायचतुष्टयः, कलितसकलकलाकलापकौशलातिपेशलः, निखिललिपिलिखनशिल्पदेशभाषाविशारदः, षाड्गुण्यप्रवीणः, निःशेषिताशेषकार्यभारः, कदाचिच्चतुरविदुरवृन्दमध्यमध्यासीनः, कविकुलकलितललितकविताविनोदमोदमानमानसः पद-

१. रत्नान्यपि चतुर्दश प्रसिद्धानि. २. विष्णोः. ३. श्रीकृष्ण इव. ४. हस्तिविशेषोऽपि. ५. ज्ञातृसमूहः.

वर्णमात्रारसभावादि रसयन्, कदाचिच्च वैणिकोपवीणितमविगीतगीतमधुरबन्धबन्धुरं प्रबन्धमनुसंदधानः, कदाचिच्च त्रिचतुरचतुरपरिजनावृतो विजननर्मालापलीलामनुभवन्, कदाचिन्मृगयाविहारमनुसरन्, भूयांसमनेहसमतिवाहयन्कदाचिदचिन्तयत्—

'राजोचिताचारविचारचुम्बनाच्चेतश्चिरादञ्चति चञ्चलत्वम् ।
तच्चक्रपाणेश्चरणैकचिन्तनान्न प्रच्युतं स्यादिह कः प्रकारः' ॥ १६ ॥

ततश्च ।

भूरिस्फुरन्मदगदाधिगताधिकाधि-
चेतोगदीकरणमन्त्रमुपेन्द्रचर्चाम् ।
सन्नव्यकाव्यगुडजिह्विकया चिकीर्ष-
न्नादिक्षदेप किल शेषनृसिंहसूनुम् ॥ १७ ॥

तस्यादेशवशान्नरोत्तमविभोर्भूपालभूषामणेः
कर्तुं केशवकेलिकोमलकलालापादपापात्मताम् ।
प्रस्तौतीह नृसिंहसूरितनयः श्रीशेषवंशोद्भवः
कृष्णः संप्रति पारिजातहरणं गद्यैश्च पद्यैः शुभैः ॥ १८ ॥

श्रीकृष्णप्रवणात्मतारसमये मद्वाङ्मये सर्वथा
दोषं हन्त हरिर्हरिष्यति यथा चेतःशरीरोद्भवम् ।
किं त्वीर्ष्याविवशात्मनामिह हठाद्दोषं मृषा पश्यतां
पैशुन्यादपकीर्तितो हरिकथाद्रोहाच्च नान्यत्फलम् ॥ १९ ॥

---

एवमनुश्रूयते—पुरा किल भगवान्वासुदेवः सकलमुनिमनुजवृन्दारकवृन्दममन्दानन्दसंदोहतुन्दिलं कन्दलयिष्यन्, दलयिष्यंश्च मधुमुरनरककंसकेशिमुखप्रखरखलनिवहम्, अहमहमिकाकलितललितलीलाकलेवरधरः, स्वयंवराहृतया विदर्भसुभ्रुवा भीमभूपालसौभाग्यवलभीकीर्तिपताकया भीष्मककन्यया रुक्मिण्या सुश्रोण्या चापरया मुरवैरिणः शरीरमात्रान्तरजीवशक्त्या सत्यभामया भामिन्या कुरुविन्दकन्दलीद्वन्द्वकन्दलित इवेन्द्रनीलाङ्कुरः, तरुणतरणिकिरणपरम्परापरिणततुहिनमरीचिचन्द्रिकाभ्यामिव

प्रभातगगनाभोगः, तुहिनगिरिजह्नुकन्यकाभ्यामिवेभकृत्तिवासाः, प्रज्ञोत्साहशक्तिभ्यामिवैश्वर्यभारः, श्रुतिस्मृतिभ्यामिव धर्मः, भागीरथीतरणितनयाभ्यामिवान्तर्वेदिप्रदेशः, नित्यसंनिहिताभ्यां हृदयनिहिताभ्यां ताभ्यां सनाथीकृतसंसारसारः, तदितरैरपि सुन्दरीसहस्रैः परिवृतः, करिराज इव करेणुभिः, सागर इव सरिद्भिः, तरणिरिव मरीचिभिः, स्तनयित्नुरिव तडिद्भिः, परमात्मेव प्रकृतिभिः, अभिनववनविहारारामरामणीयकासु रैवतकाधित्यकासु ससुहृद्बन्धुपरिवारोऽभिरेमे। तथा हि।

दरदलितकदम्बालम्बिरोलम्बसंप-
त्प्रसृमरमधुधारासारसान्द्रासु तासु।
[1]अजवनपवनासु स्वैरमालिङ्गिताङ्गी-
ररमयदयमुच्चैरङ्गना मङ्गलश्रीः॥ २०॥

तत्र च गिरौ

परिमिलितमिलिन्दामन्दहिन्दोललीला-
विसृमरमकरन्दस्यन्दिमाकन्दसान्द्रे।
रुचिरचिकुरभाराः सुन्दरीः स्वर्णगौरी-
र्मुदिर इव मयूरीर्मोदयामास शौरिः॥ २१॥

प्रतनुपवनवेल्लत्पल्लवा मल्लिवल्लीः
पुलकमुकुलिताङ्गीरच्छवक्षोजगुच्छाः।
अधरमधु वधूस्ता धूतहस्ताः सलीलं
मधुप इव मधुद्विट् संविचिन्वन्विरेजे॥ २२॥

प्रत्यापगं प्रतिवनं प्रतिशैलशृङ्गं
प्रत्याश्रमं प्रतितरु प्रतिमञ्जुकुञ्जम्।
प्रत्यङ्गनं प्रतिकलं कलयन्विलासां-
स्तस्मिन्वसन्त इव कंसरिपुर्विरेजे॥ २३॥

---

1. मन्दवातासु.

अपि च ।

स्वैरं तत्र सरोविहाररसिकः श्रीचन्दनालेपवा-
　नन्वीतां मुहुरामृशन्मधुकरैर्माकन्दजां मञ्जरीम् ।
आचुम्बन्नपि पद्मिनीमभिनवामालिङ्ग्य वासन्तिकां
　वासन्तोऽप्यथ भीतभीतवदमुं मन्दं सिषेवे मरुत् ॥ २४ ॥

एवमनवरतसुखसंदोहनिर्भरारम्भगम्भीरविभ्रमभरोदारेऽतिक्रामति कियति समये कदाचिदुचितवचनचतुरा काचिदाचरितोपयाचितव्रतावसानमनुसंदधानाया भीमभूपालनन्दनायाः परा प्रतिकृतिरतिप्रणयपात्रं प्रियसखी प्रथमोपनतप्रतीहाराधिगतागमना प्रविश्य सप्रश्रयमवनितलमिलदलककुलुलितधूलिना मौलिना प्रणम्य मस्तकन्यस्तहस्तसंपुटमविकटस्फुटाक्षरोत्तरमनतिलक्ष्यवैलक्ष्यलज्जाभिजात्यहर्षौत्सुक्यविस्मयमसृणमनतिदूरादेव वासुदेवमवादीत—'भगवन्भुवनभागधेय, विदर्भराजनन्दिनी तत्रभवन्तं सप्रणामप्रणयमिदं मन्मुखेन विज्ञापयति—

अद्यानवद्यचरितव्रतपारणायां
　त्वत्संनिधिं निधिमिवाधिहरं समीहे ।
त्वां स्वं मनोरथमिवाथ सभाजयामि
　पातिव्रतीर्जगति येन सभा जयामि ॥ २५ ॥

देवर्षिसिद्धनरकिंनरयक्षरक्षः-
　क्षेत्रज्ञयज्ञफलदैवत दैवतं त्वाम् ।
हित्वान्यदस्ति कतरत्परितोषणीयं
　तीर्थव्रतादिषु विशिष्य तु मादृशीनाम्' ॥ २६ ॥

वासुदेवस्तु

आकर्ण्य वाचमुपकर्णवितीर्णचारु-
　श्रीलोचनाञ्चलचलाचलकर्णपूरः ।
हर्षातिपीवरकलेवरपीतपर्व-
　पाथोधिगर्वनिकरोऽधिकरोचमानः ॥ २७ ॥

स्मितसुभगकपोललोलमौलिः सरभससादरसानुरागचेताः ।
सपदि सदनमाससाद भैष्म्या द्रुतपदमुत्तरयन्फलेन दूतीम् ॥ २८ ॥ (युग्मम्)
मरकतमणिवेश्मरश्मिजालैः कवलितमण्डल एष चण्डरोचिः ।
परिणतकुरुविन्दकन्दलश्रीहसितविलक्ष इवेक्ष्यते स्म यस्मिन् ॥ २९ ॥

स्फटिकभवनभाभिर्यत्र मित्रेऽभिभूते
हरितशिखररोचिश्चुम्बितादभ्रगर्भे ।
विधुरयमिति शङ्कां चक्रवाकी वराकी
परिहरति चकोरीचञ्चुमुद्रामुदीक्ष्य ॥ ३० ॥

प्रतिपथमथ पाथसाभिषिक्तं मृगमदनन्दनचन्दनोपलिप्तम् ।
कलितसुरभिधूपधूमधूमं घनघनसारपरागपूरगौरम् ॥ ३१ ॥
सरसकुसुमसंपदावकीर्णं भुवि पदमैन्द्रमिवात्मनावतीर्णम् ।
उपवनपवनोल्लसत्पताकाकुलकलितामलसौधतुङ्गशृङ्गम् ॥ ३२ ॥
अलिपिककुलकाकलीनिलीनस्वकलकलाकुलकामिनीकलापम् ।
द्विजगुरुसुरबन्धुतासपर्यापरपरिचारकसंभृतोपचारम् ॥ ३३ ॥

वलद्वलयवल्लरीपरिणमत्क्वणत्किङ्किणि-
प्रपञ्चितसुपञ्चमालपितगीतितालोत्तरम् ।
सलीलगतिसंभ्रमभ्रमिसुचारुचारिस्फुर-
त्प्रनृत्तपरिचारिकासहजचेष्टितैर्वेष्टितम् ॥ ३४ ॥

व्रतवेश्म विवेश केशवो निजशक्त्येव जयश्रियेव तत् ।
अधिदेवतयेव कुण्डिनाधिपपुत्र्या समधिष्ठितं चिरम् ॥ ३५ ॥

(सप्तभिः कुलकम्)

द्विजपूजनदेवसेवनादौ गुरुशुश्रूषणकर्मणि प्रसक्ताम् ।
परितः परिवारमादिशन्तीं हृदयं कृष्णपदे निवेशयन्तीम् ॥ ३६ ॥
यदुवल्लभवल्लभासहस्रं परिवारं परमप्यपारमारात् ।
विनयप्रणयोपदर्शनेनानुनयन्तीं परमां मुदं नयन्तीम् ॥ ३७ ॥

परिचर्य शुभाश्विरं चिरण्टीरुपगृह्याशिषमादरेण तासाम् ।
निजमागमनं प्रतीक्षमाणां स विदर्भोद्भवसुभ्रुवं ददर्श ॥ ३८ ॥

( त्रिभिर्विशेषकम् )

सचकितमुदतिष्ठद्यावदेषा न तन्वी
स्तनजघनभरार्ता नावृणोद्यावदङ्गम् ।
सरभसमभिसृत्याकस्मिकं सस्मितां तां
गलवलयितबाहुर्द्रागुपावेशयत्सः ॥ ३९ ॥

सोदस्थादथ पुलकोद्गमेन तस्मै स्वेदाद्भिः समुदितपाद्यमाद्यपुंसे ।
हृत्पद्मासनमधिरोप्य तं चिराय स्तम्भेनास्तमितरसान्तरं निदध्यौ ॥४०॥

आनन्दकन्दलितसान्द्रविसारिवारि-
पारिप्लवोत्पलविकस्वरचारुतारम् ।
आकुञ्चिताञ्चलमुदञ्चितपक्ष्म किंचि-
त्सा लोचनं हरिमभि न्यधितार्घ्यमर्घम् ॥ ४१ ॥

अथ रथचरणायुधं विधानाद्बहुविधनव्यपदार्थसार्थभव्यैः ।
परिजनरचितैर्गुरूपचारैरुचितमसौ न चिरेण पर्यचारीत् ॥ ४२ ॥

तदनु दनुजवैरिणः प्रियाणां प्रणयभरात्प्रणिनाय सा प्रियाणि ।
अदित बहु मुहुर्मुदा तदानीं चिररचिताञ्जलि चास्थिताग्रतोऽस्य ॥४३॥

हुतहुतवहधूमश्यामलापाङ्गरिङ्ग-
न्मसृणमुकुलरज्यन्नेत्रमास्यं स तस्याः ।
विलुलदलकमुद्यत्स्वेदबिन्दून्नमय्य
स्मितसुभगममार्जीत्स्वोत्तरीयाञ्चलेन ॥ ४४ ॥

हरिकरपरिरम्भोज्जृम्भिलास्यं तदास्यं
प्रतियुवतिमुखेषु न्यक्षिपत्स्वेदलक्ष्मीम् ।
किमिदमधृत खेदस्वेदमालिन्यनेत्रा-
रुणिमविनिमयेनाशेषशोभाममीषाम् ॥ ४५ ॥

---

१. सुवासिनीः. २. रुक्मिणीम्.

परमपुरुषसेवालम्बते नो विलम्बं
न च गिरमनुरुन्धे नैव वाम्यं फलन्ती ।
यदयमनवरोधः सावरोधोऽपि चैवं
त्रिभुवनसुभगानां मूर्ध्नि तामभ्यषिक्त ॥ ४६ ॥

एवमभिनवमहोत्सवपरम्परापरिचयपरिणतपरमपरितोषपोषिताशेषसुरनरनिकरे हुतहुतभुजि पूजितद्विजसमाजे सभाजितमुरजिति सुभोजितदीनान्धबधिरमूकानाथपान्थसार्थकलकलाकुलितदशदिशावकाशेऽवशेषितातिथिभागधेयेऽवसरे व्रतावसानशंसि मूर्तमिव विधिफलं भगवतो विधेर्विधेयाशेषसुरासुरोरगनरनिकरस्यात्मसंभवः प्रकृत्या कलहवल्लभो ब्रह्मिष्ठो ब्रह्मर्षिर्नारदोऽम्बरतलादवततार ।

जटाजूटं मौलौ भसितधवलं पुण्ड्रमलिके
दधानश्चैणेयीं त्वचमपि दधानोऽसफलके ।
वसानोऽन्यां वार्क्षीमपि[1] कटितटे स्कन्धनिहित-
क्वणद्वीणाक्वाणश्रवणवलितापाङ्गमुकुलः ॥ ४७ ॥
करकलितचलाक्षमालभारी स्फटिककमण्डलुदण्डमण्डनश्रीः ।
सुरवरनरकिंनरोपगीतः सुकनकपीतबहूपवीतवीतः[2] ॥ ४८ ॥
मुनिरथ कलहप्रियः प्रकृत्या समुपससाद स सादरं सदारम् ।
मनुजमनुजमादितेयभर्तुर्[3]विभुमवतीर्णमिहात्मनैव पूर्णम् ॥ ४९ ॥
अथ हरिरभिसृत्य तं ववन्दे लघु सहसा सह सापि तेन भैष्मी ।
पदकमलविलोलकुन्तलालीमिलदलिपालिभृता नतेन मूर्ध्ना ॥ ५० ॥
ब्रह्मनिष्ठमकनिष्ठचेष्टितं विष्टपत्रितयशिष्टवरिष्ठम् ।
ब्रह्मसूनुमथ विष्टरश्रवा विष्टरे समुपविष्टमयष्ट ॥ ५१ ॥
धर्मधाममहसेऽर्घ्यमनर्घं व्यातनोदनघमर्घ्यतमाय ।
पाद्यमाद्यमुनये विनिवेद्य स्वाद्यमार्पिपदथो मधुपर्कम् ॥ ५२ ॥

१. वृक्षसंबन्धिनीं त्वचम्. २. अनेकयज्ञसूत्रपरिवेष्टितः. ३. आदितेयभर्तुरिन्द्रस्यानुजं श्रीकृष्णम्.

मन्दगन्धवहचन्दनचर्चाचित्रमाल्यवसनाभरणाद्यैः ।
वर्त्मखेदमपनीय मुरारिस्तं जगाद विनयप्रणयाभ्याम् ॥ ५३ ॥
'किं पुरा चकृम पुण्यमगण्यं कैर्व्रतक्रतुभिरीजिम देवान् ।
यन्मनोरथपथातिथिमद्य त्वां दृशा सकलया कलयामः ॥ ५४ ॥
जन्म तन्मम जगन्महनीयं जीवनं भुवनपावनमुच्चैः ।
श्रीपतित्वमपि निश्चलमेवं यस्य मेऽद्य समभूः प्रतिसूस्त्वम् ॥ ५५ ॥
त्वत्समागमभवां मुदमन्तः संनियन्तुमपि न प्रभवामि ।
स त्वदागमफलं प्रतिकर्तुं प्रष्टुमूहितुमहो कथमीशे ॥ ५६ ॥
अद्य सा बहु मता मम तावद्भीष्मजात्रभवता भवतास्याः ।
वैधसव्रतविधेरवसाने यत्समर्थितमिहातिथिभूयम् ॥ ५७ ॥
कायवाङ्मनसशुद्धिसमृद्धैर्यैस्तपोभिरघसंघमहार्षीः ।
त्वं सुरासुरसुरक्षणदक्षः पृच्छ्यसे स किमनामयमत्र' ॥ ५८ ॥
इत्युदीरितगिरं स गरीयान्व्याजहार बहुगौरवगर्भम् ।
निर्भयं भवति बिभ्रति विश्वं मादृशां कथमिवाशिवशङ्का ॥ ५९ ॥

त्वत्कोपवह्निपरिदग्धहिरण्यकेशि-
　लङ्केशशङ्खमुखदानववंशबीजा ।
द्विट्सुन्दरीनयननीरझराप्लुतापि
　दुःखाङ्कुरं कथमहो वसुधा तनोतु ॥ ६० ॥

अष्टाङ्गयोगश्रुतिशीलनाद्यैरधोक्षजं त्वामपरोक्षयन्तः ।
हर्षं व्रजामो न वयं यथेत्थमाराधयन्तोऽद्य सदारमारात् ॥ ६१ ॥
अथाभिवाद्येन्दुकलाकिरीटं शौवातपदात्प्रत्यभिवर्तमानः ।
सानन्दमिन्द्रं सुरसुन्दरीभिर्बद्धोत्सवं नन्दनसीम्न्यदर्शम् ॥ ६२ ॥
विदर्भजां कल्पतरुप्रसूनफलोपदाभिः परिवर्धयन्तीम् ।
ससंभ्रमामिन्द्रवधूमपृच्छं दिवौकसां कारणमुत्सवस्य ॥ ६३ ॥

अथ सा ससंभ्रममतिदूरावनतिविस्रस्तकर्णावतंसेन शिरसा परमोन्नतिरमणीयपरिणाममभिप्रणम्य समुत्फुल्लपुण्डरीकप्रतिमल्लनयना सस्मितमवादीत् ।

'मद्देवरोपेन्द्रवधूः पतिव्रता व्रतावसानेऽद्य सुरद्विजव्रजान्' ।
आबालगोपालमसौ तनोति भोः प्रकाममानन्दरसेन तुन्दिलान् ॥ ६४ ॥
आकर्ण्य तां कर्णसुधासवर्णां वार्तां व्रतोद्यापनजामुपागाम् ।
अकुण्ठितोत्कण्ठमिहाहमैन्द्रं पूजाप्रतिच्छन्दनमप्रतीच्छन् ॥ ६५ ॥
'नानोपचारार्चननिष्क्रयेण प्रादादनुद्रुत्य सुदूरमिन्द्रः ।
यत्स्वर्गसर्वस्वतया तयापि शच्यादरावेशवशाद्वितीर्णम् ॥ ६६ ॥
अनन्यसामान्यगुणं वरेण्यं तत्पारिजातं क्षपितारिजात ।
तुभ्यं वितीर्य प्रतियातयामि त्वन्निर्मितं प्रेममहार्घमर्घ्यम् ॥६७॥(युग्मम्)

किं बहुना ।

नानापुष्परसेष्टगन्धवसनालंकारशृङ्गारस-
चेष्टासौभगधर्मघर्मशिशिरान्सूते चिरं चिन्तितान् ।
ध्वान्तं हन्ति च बाह्यमान्तरमपि द्विट्क्षुत्पिपासाजरा-
जन्यं दैन्यमपाकरोति कुसुमं शौरे विधेः शासनात्' ॥ ६८ ॥
इत्युदीर्य मुनिनामुनार्पितं पारिजातकुसुमं प्रणयेन ।
सादरं समभिसृत्य संदधे पाणिपल्लवयुगेन मुरारिः ॥ ६९ ॥
सुचिरमथ विचिन्त्य चक्रपाणिर्विरचयितुं रुचिराश्रयादशोच्यम् ।
व्यधित तदवतंसकं प्रियाया नयनचलाञ्चलचुम्बि कर्णमूले ॥ ७० ॥
मधुकररचिताधरोष्ठदंशव्यसनविधूनितपाणिपल्लवाग्रा ।
विधृतविकचपारिजातपुष्पा परिशुशुभे सुशुभेव कल्पवल्ली ॥ ७१ ॥
अदरदलितकेसरारुणाङ्गैरलिभिरलम्भि चिराय तत्प्रसूनम् ।
सपदि च कुटिलैः पतिप्रियाणामुपचितरोषकषायितैरपाङ्गैः ॥ ७२ ॥

ततश्च रुक्मिणी चक्रपाणिचक्षुरुत्क्षेपलीलासमुन्नीतभावा भूयोऽपि भगवन्तं स्वयंभुवोऽङ्गसंभवमभिनवलावण्यलक्ष्मीनिक्षेपकलशेनेवाविरलतारकानुकारिकुसुमनिकरकरम्बितालकावलीतिमिरभरातिसान्द्ररजनीप्रसङ्गसंकुचितकमलमुकुलेनेव विरचितरुचिरसिन्दूरपूरपरिपूरितसीमन्तसीमोपसंजात-

---

१. अस्वीकुर्वन्. २. पारिजाततरुप्रसूनम्.

मञ्जुमाणिक्यमञ्जरीजरीजृम्भमाणशोणकिरणनिकुरुम्बेनेव सर्वाङ्गीणलावण्यलतानूतनकिसलयेनेव शिरसि विनिहितेन करयुगलेन कथंकथंचिदुदञ्चदुत्तरीयाञ्चला हरिणगृहिणीचक्षुराक्षेपदीक्षागुरुणा लक्ष्यमाणगतागतेन दरवलितापाङ्गभङ्गिरिङ्गणालिङ्गितापराङ्गनाभ्रूविभङ्गभीषणक्रूरकटाक्षवीक्षणप्रपञ्चेन ईषदुन्मिषितापरभागपरभागेण स्मेरतरतरलतारकेण जाह्नवीनीरनिर्झरेणेव धौतकर्पूरपूरेणेव स्नेहसुधासारेणेव ईर्ष्यावेशविवशकामिनीकुटिलकटाक्षपङ्कसंकरप्रसङ्गकलुषितमिव वासुदेववदनं स्नपयता नयनयुगलेन मुनिमुखाभिमुखमूर्ध्वमुच्छ्वसितपक्ष्मणा नीहारगौरवैरिञ्चरुचिपरम्परापरिचयोल्लसन्नयननीलनीरजप्रभापटलघटितसुरतरङ्गिणीतरणितनयासंगमालिङ्गितमिवान्तरालमावेदयन्ती तं मुनिं प्रणनाम । सोऽपि चैनां चतुर्वेदोदीरिताभिराशीर्भिरभ्यवर्धयत्—'भद्रे, निःसीमसौभाग्यभाजनं भूयाः ।

शैलजेव तुहिनद्युतिमौले रोहिणीव किल शीतमरीचेः ।
त्वं शचीव नमुचिप्रतिहन्तुर्वल्लभासु सुभगा भव भर्तुः ॥ ७३ ॥

भ्रूविभङ्गकुटिलान्यतुलेर्ष्यावेशरोषकलुषाण्यरुणानि ।
बिभ्रतु भ्रमरविभ्रममुच्चैस्त्वन्मुखेऽन्यवनितानयनानि ॥ ७४ ॥

वीतगर्वगरलास्तरलाक्ष्यः श्वासधूमपरिधूसरिताशाः ।
मन्युसंतमसनेत्रपयोदैरद्य दुर्दिनमियं जनयन्तु ॥ ७५ ॥

श्रीपतेर्निवससि त्वमेकिका चेतसीति सुचिरान्निरचैषम् ।
सर्वगर्वमतिखर्वयन्नयं यद्वतंसयति पुष्पमिदं ते ॥ ७६ ॥

कुसुमं ददतस्तवाद्य शौरेर्बहु मन्ये विषमे विवेचकत्वम् ।
पदमेतदनीदृशीषु कुर्वन्न कथं शोच्यतमां दशामधास्यत् ॥ ७७ ॥

सौन्दर्यसौधवलभी त्वमिहासि नूनं
　　नेत्रोत्पलप्रकरतोरणवत्यनेन ।
कर्णे कृतेन हरिणा हरिणाक्षि यस्या-
　　मादीपि दीपकलिकाकृतिनानुरागः ॥ ७८ ॥

अलभ्यमेतत्सुरसुन्दरीभिर्लब्धं त्वया पुष्पमहो निशम्य ।
देव्यो निजं जाम्बवतीपुरोगा विनिग्रहीष्यन्ति कथं नु रोषम् ॥ ७९ ॥

सात्राजिती सात्र जितत्रिलोकीसौभाग्यभाग्याद्य विनिन्द्य रूपम् ।
उत्कर्षमीर्ष्याविवशा भवत्याः श्रुत्वा कथं वा सहसा सहेत' ॥ ८० ॥

इति विविधवचोभिस्तेजयिष्यन्सपत्नी-
गुणगणगरिमाणं पारिजातस्य तस्य ।
अपरयुवतिदूतीकर्णकुम्भोम्भनीयं
विदधदभिदधे तां भीष्मजां ब्रह्मसूनुः ॥ ८१ ॥

त्रिभुवनकमनीयं पारिजातप्रसूनं
मुनिकथितमुदारं तत्प्रभावप्रकर्षम् ।
हरिविरचितमस्याः साधुसौभाग्यमुच्चै-
रथ कथयितुमीषुश्चेटिकाः स्वामिनीभ्यः ॥ ८२ ॥

वैरिस्वैररणे परोपकरणे लोकापदां वारणे
सद्धर्माचरणे बुधानुसरणे यः क्ष्माभृतां दीक्षितः ।
तस्यादेशवशान्नरोत्तमविभोः कृष्णस्य सन्निर्मिता-
वुच्छ्वासः किल पारिजातहरणे पूर्वोऽप्यपूर्वोऽभवत् ॥ ८३ ॥

द्वितीय उच्छ्वासः ।

अथ तथाविधान्योन्यविविधविरोधबन्धबन्धुराः कथाः कथयति विधितनूजे उपजापकुशलास्तत्कालकलितकोपकुटिलकंधरमालोकयन्त्यः स्खलच्चटुलचरणविन्यासा मुहुर्मुहुर्मुनिकथाकर्णनवितीर्णकर्णा व्रजन्त्योऽन्तःपुरं परिचारिकाः समासेदुः । अथ ताः साभ्यसूयं सनिर्वेदं साविक्षेपं सबाष्पगद्गदं पारिजातप्रसूनवृत्तान्तावेदनेन सकलावरोधवधूरुत्तेजयांचक्रुः । ताश्च तद्वृत्तान्तगरलमापीय विलुप्तसकलसंस्काराः स्तिमिताखिलकरणाः सद्यःस्खलत्कुसुमाम्बराभरणाः शोणदृशः सर्वाङ्गीणस्वेदसलिलकलिताः काश्चित्कषायिताशया जुघूर्णिरे । काश्चित्समुज्झितविभ्रमविहाराः सोष्मनिःश्वसितधूमधूसराः कलितबहलकोपकृशानुसमिद्धा विन्ध्यविपिनवीथय इव प्रजज्वलुः । काश्चिच्च चण्डनिःश्वसनसमुत्कम्पिपयोधरा बाष्पनीरधारासारहा-

१. सत्यभामा.

रिण्यः साहंकारहुंकाररसिता विलक्षाननसुधांशवो वर्षानिशा इवान्धतमसे निममज्जुः । इतराश्च तत्र भूयो भूयः स्वदूतीः ससंभ्रमं पृच्छन्त्यः परस्परं मन्त्रयमाणाः कर्णाकर्णिकयोपवर्णयन्त्यस्तमुदन्तं सत्यभामाकर्णपथातिथीचक्रिरे ।

अत्रान्तरे सरसिजासनसूनुसेवा-
संभावनामरवशां प्रसमीक्ष्य भैष्मीम् ।
ईर्ष्याकषायकलुषं परिभाव्य शौरिः
शुद्धान्तमाशु परिसान्त्वयितुं जगाम ॥ १ ॥
निष्क्रम्य रम्यतरहर्म्यतलात्स भैष्म्या
व्याजेन सम्यगुपगम्य नियम्य वाचम् ।
चित्राणि तत्र तरुणीगणचेष्टितानि
स्वैरं चरन्सुचिरमाकलयांचकार ॥ २ ॥

तथा हि ।

अंसानमत्करतलार्पितपाण्डुगण्डा
निःश्वासधूमकथितान्तरहव्यवाहाः ।
स्तम्भावलम्बितनवः स्खलदुत्तरीयाः
काश्चिन्मुहुर्मुहुरलं मुमुहुर्विदग्धाः ॥ ३ ॥
उन्मीलिते मणिगृहे स्वमुखेन्दुबिम्बे
काश्चिन्निरन्तरपरिस्रवदस्रनीराः ।
निःस्पन्दमन्दमतयः स्फुटचन्द्रकान्त-
पाञ्चालिकातुलकलाः कलयांबभूवुः ॥ ४ ॥
काश्चिद्रुषा विचकरुर्मणिहारहीर-
चीराणिनीरजदृशोऽथ विधूय धैर्यम् ।
वीरायितं किमपि तत्र रुषोपदिष्टां
येनाचिरेण बिभिदुः प्रकृतिं निसृष्टाम् ॥ ५ ॥
काश्चिद्विचुक्रुशुरुपेन्द्रममृष्यमाणाः
काश्चित्प्रदुद्रुवुरथ द्रुहिणाङ्गजाय ।

काश्चित्क्रुधा विरुरुधुश्च विदर्भजातां
दैवं च काश्चन निनिन्दुरनिन्दिताङ्ग्यः ॥ ६ ॥
अन्योन्यमेनां प्रशशंसुरन्या धन्याद्य मान्या ननु भीष्मकन्या ।
अर्हा हि दाशार्हपतेः प्रियाणां सत्पुत्रमित्राभिजनप्रबन्धैः ॥ ७ ॥
का मुह्यतु द्रुह्यतु का प्रसह्य सह्यं त्विदं नह्यसमञ्जसं नः ।
दंदह्यते यत्किल कूपकुल्या तुल्यायते हन्त सुरस्रवन्त्या ॥ ८ ॥
काचाङ्कुरं काङ्क्षतु काञ्चनेन का वञ्जुलं मञ्जुलयेच्च मल्ल्या ।
का स्पर्धयेत्सौधसुधां सुधां वा ज्योत्स्नीं तमिस्रामपि रूपयेत्का ॥ ९ ॥
जाने जने तुल्यजनोपजन्यं जन्यं च सौजन्यमपोह्य मान्यम् ।
स्पर्धा तु का मेरुनमेरुरेण्वोः पिपीलिकापर्वतयोश्च मैत्री ॥ १० ॥
तथा कथाः कर्णपथातिथीनथ प्रियाजनस्योपनयन्नयन्नयम् ।
क्वचित्प्रकाशं क्वचिदप्रकाशवन्मुग्धावरोधं विचचार कौतुकात् ॥ ११ ॥

अथासां तथाविधोपनतकोपरूक्षाक्षरा अपि श्रुतिमनोहारिणीर्निःस्नेहा अपि सुधासारोद्गारिणीर्वाणीः शृण्वन्नमन्दानन्दसंदोहसागरावगाहमन्वभूत् । चिन्तितवांश्च—

'मानुष्यस्य विभूषणं तरुणता तस्याः पुनर्वैभवं
तस्यानामयमस्य चोन्नतकुचद्वन्द्वाङ्गनालिङ्गनम् ।
तस्याप्यश्रुकुलाकुलांसवलितग्रीवप्रतीपाङ्गना-
वक्त्रालोकनमस्य च प्रणयिनीमानापनोदक्रमः ॥ १२ ॥

अपि च ।

उन्मीलत्कमनीयकोमलपदन्यासाः सहासाः स्फुर-
च्छृङ्गारादिरसप्रपञ्चितसुधामाधुर्यधुर्याः परम् ।
सद्भावाः सदलंक्रियातिललिताः प्रौढाः प्रियासूक्तय-
श्चेतः कस्य न मज्जयन्ति सहसा ब्रह्मप्रमोदार्णवे ॥ १३ ॥

तथा हि ।

अस्याः पद्मपलाशपेशलदृशः शृङ्गारवारां भरैः
कामः काममुरोजकुम्भयुगलं स्वैरं चिरादुम्भति ।

उत्सिक्तादिह हन्त संतततरा तेषां यदुत्सर्पिणी
धारा हारलतावितानकपटादुच्चैः समुन्मीलति ॥ १४ ॥

इयं च

किंचित्कुञ्चितलोचनं विरचितभ्रूभङ्गमभ्युन्नम-
न्मध्यं वेल्लितबाहुवल्लि सरसव्याकोशवक्राम्बुजम् ।
प्रोदञ्चत्कुचमानमत्तनु गलद्वेणीमिलद्भूतलं
सज्या कामधनुर्लतेव हरति व्याजृम्भमाणा मनः ॥ १५ ॥

अस्याश्च

कुचगिरिमधिरुह्योत्सर्पिणी भोगिनीव
व्यथयति कबरीयं हारनिर्मोकमुक्ता ।
इह बहिरुपयान्त्या नाभिमूलाद्गभीरा-
त्सरणिरुदयतेऽस्या रोमराजीमिषेण' ॥ १६ ॥

अत्रान्तरे सहचरीपरिचारिकाभ्यः
साकूतकौतुकमवेत्य स सत्यभामाम् ।
सापत्न्यमत्सरचिरार्जितस[1]त्यभामां
तामाससाद सहसा मुरजित्सशङ्कम् ॥ १७ ॥

अथ किंचिदवाञ्चितानना विमना मानवती विमानिता ।
हरिणा परिणाहिसंज्वरा ददृशे साश्रुमुखी सखीवृता ॥ १८ ॥

गुरुपीनपयोधरस्थलस्खलदच्छोच्छलदुष्णबाष्पवर्षैः ।
श्वसितैः परुषायतैश्चिरं परिवारं परतो निवारयन्ती ॥ १९ ॥

करतलकलितालकाकुलास्या बहलगलद्विमलाश्रुशून्यशून्याम् ।
जनमुपनतमन्तिके स्पृशन्तीमपि मुकुलामरुणां दृशं दधाना ॥ २० ॥

तरुणितकरुणाभिस्तामवष्टभ्नतीभि-
श्चटुलचटुभिरश्रुक्षामरुद्धाक्षराभिः ।
अकृतककृतकाकुव्याकुलाभिः सखीभिः
प्रतिपदमनुनीयोन्मृज्यमानाश्रुपूरा ॥ २१ ॥

---

१. सत्यक्रोधाम्.

पाणिशोणिममुखारुणिमभ्यां क्लृप्तकोकनदकोमलकान्ति ।
पङ्कजं नखमुखैर्विलिखन्ती घ्रातुमात्तमपि मर्मरयन्ती ॥ २२ ॥

अनुहनु विनिविष्टपाणि जानुप्रणिहितबाहु मुखार्पिताङ्गुलीकम् ।
असकृदपि शिरो विधूनयन्ती धृतरुदितस्मितविस्मयस्मयोर्मिः ॥ २३ ॥

परिसरमपहायोपास्यमाना सुदूरा-
त्सभयमनुचरीभिः साञ्जलि प्राञ्जलाभिः ।
किमपि मनसिकृत्य प्रोत्पतन्ती पतन्ती
किमपि च बत भूतावेशमाबिभ्रती वा ॥ २४ ॥

कौसुम्भं सहसा विहाय मलिनं वासो वसाना सितं
भाललेपितरक्तचन्दनरसा बद्धैकवेणी चिरम् ।
वासःखण्डमकाण्ड एव सरुजेवाबध्य मध्येशिर-
श्चन्द्राभं प्रियरोषचिह्नमपरं संत्यज्य भूषाभरम् ॥ २५ ॥

तल्पेऽनल्पतरे मृगाङ्करुचिरे बाहूपधाने मुहु-
स्तापात्पार्श्वविवर्तनव्यतिकरेष्वालम्बितालीकरा ।
क्लिश्यन्ती सरसैर्मृणालवलयैः श्रीखण्डचर्चाचयै-
स्तोयार्द्रैर्नलिनीदलैः किसलयैः किं चानिलैः शीतलैः ॥ २६ ॥

त्यज मलयजपङ्कं भूरिभारं च हारं
परिहर हरिणाङ्कं सानुकम्पं पिधेहि ।
अयि मलयसमीरं प्राशय प्राशयामुं
बिसविषधरसर्पानित्यनुव्याहरन्ती ॥ २७ ॥

दृष्ट्वा च तां क्रमेण कृशिमाक्रान्तकलेवरां प्रियसहचरीकरोपनीतनूतनतरतरुकुसुमकिसलयोपकल्पितानल्पतल्पमध्यमधिशयानां पन्नगीमिव निःश्वसन्तीं निदाघदग्धदावहरिणीमिव कांदिशीकां नीरससरःशफरिकामिव बहुशो विपरिवर्तमानां तथाविधमवस्थान्तरमनुभवन्तीं नयनोपान्तनिपतद्बाष्पधारां सात्राजितीं ग्रहग्रस्तामिव ग्रहिलामिव मत्तामिव व्याध्यभिभूतामिव सरापस्मारपरवशामिवाशङ्कमानश्चिरं चिन्तयांचकार—

'एतस्याः कमनीयकोमलकलालीलानिधेर्वेधसः
कान्ताकल्पनशिल्पसंभृतपरीणामातिचित्राकृतेः ।
रम्यो यौवनवच्चिराय विकृतिं नव्यां समुन्मीलय-
न्भावः कोऽयमहो महोत्सवमयः प्रत्यङ्गमालिङ्गति ॥ २८ ॥

तथा हि ।

दौर्जन्यं किमहो मनोजहतकस्यैतत्समुज्जृम्भते
किं वादृष्टचरो ग्रहव्यतिकरो घोरः समुन्मीलति ।
यद्दावानलदह्यमानदमनोद्दामापदा(?)लम्बिभिः
कष्टं भोः परिपेलवैरवयवैः कान्ता चिरं ताम्यति ॥ २९ ॥

अथवा कृतं संदेहेन ।

सूदनं सदनन्तानां गुणानामृषिणार्पितम् ।
पारिजातमिदं जातमलेरिव कलेः पदम्' ॥ ३० ॥

तस्मिन्विचिन्तयत्येवं निभृतं पश्यति प्रिये ।
विषसादाधिकं भामा शयने निषसाद च ॥ ३१ ॥

अवगुण्ठ्य शिरस्तिरः शयानामतिमानामवगत्य सत्यभामाम् ।
स्मितगर्भमुखार्पिताङ्गुलीकं सशिरःकल्पितमुद्वहन्व्यलीकम् ॥ ३२ ॥
उपचारपरालिनिर्विशेषं कलयन्पाणितलेन तालवृन्तम् ।
स्वनिवेदनतो निषिध्य दासीरथ पार्श्वं हरिराससाद तस्याः ॥ ३३ ॥

अथ तथाविधे व्यतिकरे करकलितकान्ताकर्णावतंसीकृतचारुपारिजातकुसुमपरागवासनासंभवश्चटुलितमदकलमिलदलिकुलकलितमञ्जुगुञ्जारवस्तालवृन्तान्दोलनोन्मीलदनिलबहलितोऽन्तःपुरान्तरालेऽननुभूतपूर्वः कोऽपि परिमलः समुल्ललास ।

तमथ कमपि गन्धं बन्धुरं सोपलभ्य
प्रभवमिह समाना तस्य जिज्ञासमाना ।
स्तिमितकरणवृत्तिर्द्रागपावृत्य वक्त्रं
किमपि तरलिताक्षी विस्मयाब्धौ ममज्ज ॥ ३४ ॥

'कथयत कथमेव प्रादुरासीत्कुतो वा
कलयत च किमीयः कर्षतीवेन्द्रियाणि' ।
प्रतिपदमिति वारंवारमाघ्राय गन्धं
मधुमथनमहेला सा सखीरन्वपृच्छत् ॥ ३५ ॥

अतरलसरलाङ्गुलीवृतास्यं कृतकरुषा हरिणोपरुध्यमानाः ।
मुहुरपि च तयानुयुज्यमानाः संमदिहताधिहतास्तदा तदाल्यः ॥ ३६ ॥
सचकितमितरेतरं दिशन्त्यस्तरलतराक्षि दिशो निरीक्षमाणाः ।
कृतकृतकविवादहेतुवादाः क्षणमथ तामतिवाहयांबभूवुः ॥ ३७ ॥
अकथयति तदा तदालिवर्गे स्वयमतियत्नसमुद्यतोर्ध्वकायम् ।
अलसवलितकंधरं समन्ताद्दिशि दिशि साथ भृशं दृशं दिदेश ॥ ३८ ॥
स्वाधिकाधिपरिबाधितगात्रं सा विषादमिव मूर्तमुपेतम् ।
तं दृशा विकलया कलयापि प्राप्य रोषकलुषेण दिदीपे ॥ ३९ ॥
कोपपाटलितलोललोचनप्राञ्चलेन परिचुम्ब्य तमीषत् ।
द्राग्विवर्तितमुखी सखीजने भ्रूविभङ्गकुटिला दृशमूहे ॥ ४० ॥
रोषपोषितमुखाक्षिविकारा स्तम्भिताश्रुकुलसंकुलकण्ठा ।
नोपकल्पितमपि स्वहृदासौ मानिनी वचनचापलमाप ॥ ४१ ॥
यत्तया न बिभिदे मुखमुद्रापूर्य तद्वपुरमानिव मानः ।
कज्जलाविलगलज्जलदम्भाद्भूरिधारमवहन्नयनाभ्याम् ॥ ४२ ॥
अतिकृच्छ्रमुदस्य कण्ठकूपान्नयनद्रोणियुगप्रवर्तितेन ।
गलताश्रुजलेन सा तदानीं सहसापूरि शुभावुरोजकुम्भौ ॥ ४३ ॥
सहसानुचरीः परीतपार्श्वाः सुदिती सा नुदती सतीव्रतापम् ।
उदवेजयदश्रुमिश्रितास्या हृदयेशं ग्लपयांबभूव भूयः ॥ ४४ ॥
अयमवसर इत्युदीक्ष्य सख्यः समुपससाद ससाध्वसं मुरारिः ।
अथ करकलितं पटाञ्चलेनाननमपिधाय पुरश्चिरं रुदत्याः ॥ ४५ ॥
द्रुतपदमुपसृत्य स प्रियाया नयनजनीरभरैरपूरि पाणी ।
विलयमुपनिनीषिताय नूनं तदनुशयाय जलाञ्जलिं विधित्सुः ॥ ४६ ॥

---

१. संदेहं प्राप्ताः.

दयितानयनोदबिन्दुवृन्दव्यतिषङ्गी स तदञ्जलिर्जिगाय ।
स्फुटमौक्तिकपूर्णताम्रपर्णीजलपूरप्रविकीर्णशुक्तियुक्तिम् ॥ ४७ ॥
ललनावदनानुबिम्बचुम्बी प्रजहासाञ्जलिरच्युतस्य नाभिम् ।
विगलन्मकरन्दबिन्दुधारानिकरोन्मीलदनिन्दितारविन्दम् ॥ ४८ ॥

ततश्च तत्कालगलदमलललनाविलोलनयननीरधारासारैरापूरयन्नञ्जलीन्भूयो भूयः प्रतिक्षिपन्नन्यानन्यान्मुहुर्मुहुराददानस्तर्पयन्निवेष्टदेवता दयिताप्रसादासादनायार्चयन्निवोपनतसमुदयां प्रसादपूर्वसंध्यामुपहरन्निव करकमलकान्तिसंक्रान्तिरक्तीकृताम्बुधारारुधिरचषकान्कोपकरालकालिकायै समुपशमयन्निवातिमानदावानलज्वालाकलापमासिञ्चयन्निव प्रतियुवतिसौभाग्यगर्वकृशानुपरिशोष्यमाणां प्रियाप्रणयकल्पवल्लीं तल्लीनमना मनागुन्मार्जयन्कठिनकुचस्थलस्खलनसंचूर्णिताश्रुशीकरान्परामृशंश्च नयनयुगलमदरदरकलितकम्पेनोत्तरीयाञ्चलावलम्बिना पाणिना करकलितचारुचिबुकमास्यमुन्नमयन्ननुनयन्नेनां मानापनोददक्षाणि श्लक्ष्णानि वचांसि वक्तुमारेभे—

'विरम विरम वामेऽमङ्गलादश्रुपाता-
दलमलमतिमात्रं गात्रसंतापनेन ।
न खलु न खलु कान्ते कारणं तर्कयामः
कथय कथय किं स्यादत्र बीजं गरीयः ॥ ४९ ॥
वपुषि विशदमेतत्संदधानाम्बरं त्वं
किमिव सुमुखि शोभां शारदीमादधासि ।
यदिह विषमतापोत्रासमस्माकमित्थं
वितरसि बहुधान्यैर्लक्षणैर्लक्ष्यमाणा ॥ ५० ॥
विलुलदलकजालः केशपाशो न शोभां
कलयति कुचपीठे संलुठन्मुक्तमाल्यः ।
प्रणिहितसुमनस्कः स्नेहसंवर्धितोऽसौ
कुटिलमलिनवृत्तिर्बन्धनस्यैव योग्यः ॥ ५१ ॥
तव शिरसि ललाटारोधि नोष्णीषखण्डं
रमयति मम चेतः श्वेतमेतत्सुकेशि ।

उपनमति किमिन्दुः सेवितुं त्वन्मुखेन्दुं
असितुमुत तमस्त्वत्केशपाशापदेशम् ॥ ५२ ॥
अयमपि तव भाले चन्दनालेपपङ्कः
कलयति बत बाले कं न रक्तो विरक्तम् ।
चिकुरनिकरराहुग्रस्यमानानुरज्य-
त्परिसरमुखचन्द्रभ्रान्तिमुच्चैर्ददानः ॥ ५३ ॥
किमिति किल कपोले लोलबाष्पाम्बुधारा-
व्यतिकरहतकान्तिं वासनामात्रशेषाम् ।
मदुपरचितचित्रां पत्रवल्लीमतल्लीं
ग्लपयसि धिगधीरे मन्मनो निर्विशेषम् ॥ ५४ ॥
अधरितमधुसिन्धुः साधुबन्धूकबन्धु-
र्वलितकमलगन्धो बन्धुरस्तेऽधरोष्ठः ।
प्रथमगलितराजत्साञ्जनाश्रूदबिन्दुः
कलयति किल गुञ्जापुञ्जमञ्जुत्वमेषः ॥ ५५ ॥
वदनमदनदिव्यस्यन्दनालोलचक्रे
रतिरतिपतिदूराकृष्टकोदण्डबिम्बे ।
कुसुमविशिखलक्ष्याभ्याससंधानयन्त्रे
कथय कथमहासीः कुण्डले मण्डने ते ॥ ५६ ॥
सुमुखि शिशिररोचिर्वक्त्रमेतद्यदीया-
श्रितनयनचकोरद्वन्द्वमन्तर्मयूखैः ।
जडमतिरुहितत्वादुद्गमत्यश्रुदम्भा-
दमृतमिव कलङ्कस्यन्दपङ्कप्रसङ्गम् ॥ ५७ ॥
अयि वदनमिदं ते स्त्यानपीयूषपात्रं
द्विरदरदनखण्डापाण्डुगण्डस्थलश्रि ।
अविरतपरितापात्प्रस्रवद्भूरिधारं
यदसकृदहहापक्षीयते पक्ष्मलाक्षि ॥ ५८ ॥

करकिसलयशय्याशायि निःश्वासतापा-
दविरलगलदश्रु त्वन्मुखं मां दुनोति ।
द्विजपतिमभिभूयोद्भूतपापानुतापं
कुचशिवमभिषिञ्चत्स्वं किमेतत्पुनीते ॥ ५९ ॥

किं खिद्यसे मलयजैर्मलयानिलैर्वा
किं वा मृणालवलयैर्नलिनीदलैर्वा ।
संशीलितापि ननु शीतलसंविधानै-
र्हा हन्त हन्त हृदयं मम दन्दहीषि ॥ ६० ॥

अयि विमुञ्च रुषं मयि कोपने वद कमप्यथवा मम दुर्नयम् ।
किमिति राञ्जन (?) मञ्जनवारिभिः सुमुखि संजनयस्यसमञ्जसम् ॥ ६१ ॥
हृदि कदापि च कापि चकास्ति चेत्त्वदपरा तदवैषि यथातथम् ।
मम हृदेव परं भवती यतः सकलवृत्तिषु साक्षितया स्थिता ॥ ६२ ॥
प्रतियुवतिमुखादनार्यमार्ये किमपि वचस्तव गोचरः किमासीत् ।
कथय मम कयात्मनानुरागे वचनमयेऽपि कुतो बतान्तरायः ॥ ६३ ॥
कपटविकटचेटिकावचोभिर्गमयितुमर्हसि नो मनोविकारम् ।
रचयितुमितरेतरं वियोगं कलिकुतुकग्रहिलाः खला भवन्ति ॥ ६४ ॥
त्वमसि मम मनोविनोदभूमिः परमपरा मुखरागमात्रपात्रम् ।
वद वदनविनिर्जितेन्दुरन्या जयतितमां कतमातिमानयोग्या ॥ ६५ ॥
स्वप्नेऽपि चेद्द्वेषमुपाचरं ते द्वेषं न किं जीवितमात्मरूपे ।
तद्वैशसं सुन्दरि मां दुनोति त्वद्द्वेषमातन्वदतीव शोच्यम् (?) ॥ ६६ ॥

किं च ।

त्वं चन्द्रिका चेत्तदहं चकोरस्त्वं दीपिका चेत्तदहं प्रकाशः ।
कादम्बिनी त्वं यदि चातकोऽहं मामन्यथा मानिनि मा स्म बुद्धः ॥६७॥
नित्यं प्रियं मामवगत्य सत्यं सत्ये द्वितीयं त्वदभिन्नरूपम् ।
आरोपयस्यद्य वरोरु वाच्यं नूनं तदज्ञानवशंवदं ते ॥ ६८ ॥

किं बहुना ।

उदञ्चय विलोचनं रचय पद्मसंकोचनं
समालप विकस्वरं ननु पिकस्वरं नीचय ।
स्मितं रचय विन्दतां सपदि मन्दतां चन्द्रमा
विधेहि परिरम्भणं त्यजतु जृम्भणं चन्दनम् ॥ ६९ ॥

तापं मुञ्च विमुञ्च कञ्चुक चिरावक्लेदि (?) बाष्पायितं
संयच्छालकमस्तु वस्तुनि मया ख्याते मनागादरः ।
सान्द्रप्रेमपरम्पराभृति मयि प्राप्तेऽपि हन्त प्रिये
नन्तुं मन्तुमहो न मन्तुमुचितं क्षन्तुं परं भामिनि' ॥ ७० ॥

ततश्चेत्थमनुनयति भगवति रथाङ्गपाणौ शिरःसंजिताञ्जलौ कुञ्जराधीशकुम्भदम्भप्रतिपक्षवक्षोजचुम्बिचामरचारुचिकुरनिकरा बाष्पबिन्दुवृन्दतारकोपास्यमानास्यतुहिनकिरणा मुहुर्मुहुर्विनिःश्वसन्ती कथंकथंचिन्निरुध्यमानाश्रुमिश्रकण्ठगुनु (?) गद्गदं सोपालम्भं सत्यभामा क्षामाक्षरोत्तरमिदमवादीत्—

'अलमलं कमलाधिपते व्रज व्रजजनप्रिय नाथ नमोऽस्तु ते ।
अपि कृतं कितव श्रितकैतवैरनुनयैर्ननु यैरवहस्यते ॥ ७१ ॥
ऋजुतया स्वतयाहमबोधिषं ननु भवन्तमियन्तमनेहसम् ।
कपटनाटितके घृतपाटवं चिरमभुत्स्यधुना मधुनाशन ॥ ७२ ॥
निरणयं प्रणयं तव माधव ध्रुवमबोधमहं तव शुद्धताम् ।
बहिरिवान्तरपि प्रथयस्यहो परिजनेऽरिजनेऽपि च कृष्णताम् ॥ ७३ ॥
अपि बलिच्छलनात्कुहनानटीं विकटवामनतां तु तवामनन् ।
यदि जनस्त्वयि विश्वसिति स्फुटं महदहो ननु मोहविजृम्भितम् ॥७४॥
नरहरे भवतः प्रथिता परं दितिजनिर्दलनाय कठोरता ।
सपदि मादृशि तामबलाजने न कृपणेऽप्यवलम्बितुमर्हसि ॥ ७५ ॥
ऋजुमृदुप्रकृतौ कृतसंश्रये मयि जने जनयन्ननयं स्वयम् ।
विदधदीदृशमच्युत वञ्चनं फलमहो मनसीह किमीहसे ॥ ७६ ॥

श्रव्यं श्रुतं दृश्यमपीह दृष्टं लब्धं फलं माधव जीवितस्य ।
द्रष्टास्मि भूयः कियदद्य कष्टं येनासवो नाशु बहिर्भवन्ति ॥ ७७ ॥
नाथामि नाथामितमेतदेकं दास्यस्मि तावद्यदि दास्यसि त्वम् ।
तपः सपत्नीविजिताद्य कुर्यां येनानुकुर्यां तव वल्लभायाः' ॥ ७८ ॥

उपचितगुरुमन्यूत्पीडबाष्पार्धरुद्धा-
क्षरमिति हरिमुक्त्वा भूरि भूयो रुरोद ।
वदनमपिदधाना[1] तस्य पीताम्बरेण
प्रसभमुपहसन्ती सा तडित्वन्तमुच्चैः ॥ ७९ ॥

वैरिस्वैररणे परोपकरणे लोकापदां वारणे
सद्धर्माचरणे बुधानुसरणे यः क्ष्माभृतां दीक्षितः ।
तस्यादेशवशान्नरोत्तमविभोः कृष्णस्य सन्निर्मिता-
वुच्छ्वासः किल पारिजातहरणे जातो द्वितीयः परः ॥ ८० ॥

---

तृतीय उच्छ्वासः ।

अथ तथा विपरिदेवमानां तत्कालकरुणार्णवप्लवमानमानसो वासुदेवोऽप्येनां ससंभ्रममतिस्नेहं भुजाभ्यां परिरभ्य प्रेमनिर्भराणि वचांसि वक्तुमारेभे—'देवि सात्राजिति, कथमनवबोध्यैवापराधमुपालम्भवाक्शरप्रहारैरित्थं कदर्थ्यतेऽयं जनः। येनैतास्तव तरलनयननीरधाराः परिक्लेदयन्तितमां मन्मनोवृत्तिम्। एते च निःश्वासानिला वरविषधरफूत्कारविषमा मर्मभेदिनो जर्जरयन्ति मे हृदयम्। न चात्यन्तमसंस्तुतं तवातिकोपकारणमिदमुत्प्रेक्षितुं क्षमम्। तत्कथय कोऽत्र हेतुः। कया विरोषितासि। कयावज्ञातासि। कयासूचितासि। शापितासि मे जीवितेन। न खल्वपराधमनवबोध्यैव प्रभवः प्रभवन्ति परिजनानुपालब्धुम्। तदावेदय निर्वेदकारणम्। अनुगृहाण माम्' इत्यभिदधानमियमप्यपमृज्य लोचनजलमवनताननं सगद्गदमिदमवादीत्—

---

१. अपिदधाना पिदधती.

'सैषापरा मम नृशंस विडम्बनान्यै-
रुद्धोष्यमाणमपमानमहो मदीयम् ।
भूयोऽनुवादयसि यत्किल मन्मुखेन
जानन्नपि स्वकृतिमज्ञ इवाकृतज्ञः ॥ १ ॥
विश्वंभरं भुवनसाक्षिणमामनन्ति
त्वां तद्भवानथ कथं स विदांकरोतु ।
मद्वेदनां बत शठा न हठात्प्रयान्ति
स्वायत्ततामकरुणास्तरुणा भवन्ति ॥ २ ॥
यत्त्वं मम प्रियतमा चलचित्तदन्ति-
संदानमित्यभिहितं यदि विस्मरेस्त्वम् ।
चित्रं न तत्र मदवद्यमिहाद्य कृत्वा
जातिस्मरोऽपि लघु विस्मृतवानसीत्थम् ॥ ३ ॥
अयि मयि स्वयमेव यदर्पितं जगति सौभगवैभवमद्भुतम् ।
अपहृतं यदि हन्त न नः क्षतिर्निजपरिश्रम एव वृथा कृतः ॥ ४ ॥
तदपहार्यमभूद्यदि ते हृदि प्रिय किमित्यहहास्मि विडम्बिता ।
त्रिचतुराहमुदुह्य समुन्नतं प्रतिजनं विनमद्दधती शिरः ॥ ५ ॥
यन्नारदस्तेऽदित पारिजातं तत्स्वप्रियायै ददता त्वयाद्य ।
मानोऽभिमानोऽपि मनोऽपि किं वा नादायि नाहारि ममेह किं वा ॥६॥
वाचाटतां स्पष्टयतो द्विजाच्चिरादाकर्णयंस्तद्गुणवर्णनानि चेत् ।
सुदुर्भगोऽयं परिहासभाजनं जनः किमर्थं तदिहाभिभाषितः ॥ ७ ॥
त्वामाश्रवं[1] स्वाश्रयमाप्य सर्वा गर्वात्पराभूय पराः सपत्नीः ।
स्वप्नेऽपि नाशङ्किषि मानभङ्गं यमङ्ग संप्रत्यहमन्वभाविषि ॥ ८ ॥
शृन्वन्गृणन्विप्रियमाचरन्मे त्वं धूर्त चेन्नात्रपथास्तथापि ।
सात्राजिती सा त्रपया स्वमास्यं किं दर्शयेद्भृत्यसुहृत्समाजे ॥ ९ ॥
धिक्तं निजे यो विदधाति कैतवं निजं च धिग्यः सहसा न दीर्यते ।
अलं वचोभिर्विदितोऽसि संप्रति प्रिय प्रतिप्रेयसि गच्छ सत्वरम्' ॥१०॥

---

१. 'वचने स्थित आश्रवः'.

इति निशम्य गिरं गुरुगद्गदां स दयितां निजगाद गदाधरः ।
विधुरतामधरक्षरदक्षरद्रव सुधाभिरथ प्रशमं नयन् ॥ ११ ॥
'अयि निधेहि विधेयजने दृशं भृशममुं च विमुञ्च शुचां चयम् ।
न खलु भामिनि भामिनि भालय(?) त्वदवधीरणया विधुरीकृतः ॥१२॥
यदि रुषा [परुषा] क्षरमात्थ मा यदि कलं कलकण्ठि समालपेः ।
तदपि मामवगच्छ वशंवदं किमधिकं प्रभवेऽद्य निवेद्यते ॥ १३ ॥
यदि विदर्भभुवे स नतभ्रुवे स्वयमदात्कुसुमं मुनिरादरात् ।
प्रणयदक्षिणतादि निरीक्ष्य तन्न खलु मामनुयोक्तुमिहार्हसि ॥ १४ ॥
यदववर्णददो गुणगौरवं न कलयापि किलाशृणवं तदा ।
त्वदवतंसविधावुचितं परं सुरतरुप्रसवं परिचिन्तयन् ॥ १५ ॥
यदि ददत्कुसुमं स मुनिर्गुणानभिदधच्च निवारयितुं क्षमः ।
अयि हृदापरुषा परिभावयेर्निरनुरोधतमा हि तपोधनाः ॥ १६ ॥
सुरतरुप्रसवं तु यदीहसे तदियदर्थमियत्किमु खिद्यते ।
अपि हरिं परिभूय तरुं दिवस्तव चिरादचिरेऽपि निवासये' ॥ १७ ॥

सत्यभामा तु तदाकर्ण्य घुणाक्षरन्यायागतमिव रभसवादमिममाशङ्कमाना मनागभिनवजलदजलधारोपसिक्ता क्षितिरिवोच्छ्वसन्ती प्रभातवेलेव विगलन्मोहतिमिरपटला उत्तरसं (वं) ध्येवावन्ध्यरागशिथिलपरितापा समुपसन्नतरणिसमुदया सरोजिनीवेषदुल्लसितमुखाम्बुजा निजाशयातिशायिभुजगशायिवचनमेव ससंभ्रमं द्रढयन्ती भूयोऽपि तमेवमाबभाषे—'आर्य, यद्येतदपि वाङ्मात्रमेव तदलमायास्य वाग्देवताम् । नैतावतापि प्रत्याख्यातप्रकृतिः परप्रत्ययोत्पादनाय प्रभवसि । हृदयमुखसंवादितां तु तावकीनां सदनुसारिणी कृतिरेवावेदयिष्यति । वाङ्मूला हि व्यवहारा महीयसाम् । तथा हि ।

वाचमेव परां देवीं भूतानि समुपासते ।
सुरासुराः सृष्टिलयौ सत्यासत्ये श्रुतिस्मृती ॥ १८ ॥
धर्मस्तेन हतः सर्वो येन वागुपहन्यते ।
अयं चासौ च लोकौ द्वौ द्वे कुले चाकुले कृते ॥ १९ ॥

तदिह यदि कथंचित्पारिजातद्रुमः क्ष्मा-
मवतरति विधातुं सुन्दरं मन्दिरं मे ।
प्रतियुवतिषु धन्या विश्वमान्या मुरारे
सपदि विगतशोका पूर्णकामा भवेयम्' ॥ २० ॥

तदाकर्ण्य वासुदेवोऽपि 'देवि सात्राजिति, परमनुगृहीतोऽस्मि यदियन्मात्रेणैव कर्मणा मामानृण्यमुपनिनीषसि । किं बहुना भाषितेन, सुदुर्लभेऽपि तवाभिलषिते न विषण्णतामेति मच्चेतः, किं पुनर्दृक्पातमात्रवित्रासित्रिदिवपतिविततपतत्रिःश्वासवात्यापातनीये पारिजाततरौ । तन्निवारय नेत्रवारि वारिजाक्षि । धारय धैर्यम् । नाशय शोकमशोककिसलयशये । परिहर सितवसनमसितनयने । परिगृहाण मय(?)मण्डनानि चण्डरोषे । अनुजानीहि मामहंकारमिव महेन्द्रस्य दिव्यतरुमवतारयितुम् । अवजानीहि पुरंदरसुन्दरीम् । अयमहमक्रमविक्रमाक्रान्तशक्रः सुरतरुमाहरामि । तदुत्तिष्ठ । संभावय द्विजदेवपूजोपकरणनियोजनेन परिजनम्' इत्यभिदधानस्तत्कालसमुल्लसितवदननयननीरजां शरदमिव पूर्णकामां सत्यभामामालिङ्ग्य करकिसलयेनालम्बमानोऽह्नायाह्निककरणायोदतिष्ठत् । उत्थाय च ससंभ्रमोपनतपरिचारिकाकृतोत्कर्षकीर्तनाकर्णनापूर्णकर्णकलशगौरवादिवेषदवनमितशीर्षया सुरतरुहरणवितर्कभङ्गुरभ्रूलतया तयानुगतो नितान्तकान्तं निशान्तमाविवेश । प्रविश्य च विश्वात्मा विविधसंविधानं ध्यानावधानाह्वानसद्यःसमुपनतमत्यादरेण सत्यभामया सह साधु सत्कृत्य [कृत्य]विदशेषविश्ववन्दनीयचरणनीरोऽपि तदीयपादप्रक्षालनसलिलसंग्रहपुरःसरमुपचारचतुरश्चतुराननतनयमनल्पकल्पितैराकल्पैरलंकृत्य रस्यलेह्यचोष्यपेयभक्ष्यभोज्यकल्पनाविकल्पितैरन्नैः परमात्मा हेममये भाजने समभोजयत् ।

अथ जगद्गुरुणा हरिणादरादनुमतं बुभुजेऽभिमतं मुनिः ।
अशनजातमजातपरिश्रमः क्रमविदेष ददेऽथ शुभाशिषः ॥ २१ ॥

स च ततोऽनुमतो मुनिनामुना हरिरभामनया सह भामया ।
समघसद्विघसं परया मुदा जगदघौघविघातविशारदः ॥ २२ ॥

समनुभूय चिरं स सुखासिकामथ परस्परमिष्टसुखादिभिः ।
जिगमिषुस्त्रिदिवं मुनिपुंगवस्तमनुदारमुदारमुदाहरत् ॥ २३ ॥

'आपृच्छे त्वाममरनगरीं गन्तुकामो महेशं
सोमं सोमोज्ज्वलमनुमतास्तत्र वृत्रस्य हन्त्रा ।
उद्गास्यन्ति त्रिदशसमितावद्य गन्धर्वसंघा-
स्तद्गान्धर्वाकलनकुतुकेनाहमामन्त्रितोऽस्मि' ॥ २४ ॥

तदाकर्ण्य चाकर्णितत्रिपुरहरणपरिचरणानुसरणक्षणस्तिमितसकलेन्द्रियवृत्तिः सद्यः सतन्द्रनयनमुकुलगलदमलहर्षबाष्पशीकरासारसंस्नपितहृदयपीठः परमेष्ठितनयविरहवेदनामिवावेदयन्नविकस्वरविस्वरां गिरमुदाहर्तुमारेभे—'भगवन्महर्षे, प्रत्यूहव्यूहबहलानि श्रेयांसीति सत्योऽयं प्रवादः, यदनेककालकल्पितानल्पसंकल्पजालकलनया कथंकथंचिदुपाकृष्टोऽपि स भगवान्सुरपुरपुरहरमहोत्सवालोकनकुतूहलेन दूरमपह्रियसे । तद्भरमीश्वराराधनान्तरायाचरणाद्विरहवेदनानुभव एव मादृशाम् । तद्गच्छ स्वच्छन्दमिन्द्रसदनम् । ममापि महेन्द्रपादपद्मदिदृक्षोत्तरलयति मानसम् । तदनुज्ञापेक्षा तु क्षपयति समयम् । किं तु

सदनमुपगतेन श्रीमताद्यामराणां
दनुतनुभववंशोद्दामदावानलौजाः ।
प्रणयविनयपूर्वं पूर्वमुक्त्वा प्रणामा-
निदमथ मम वाच्यो वाचिकं नाकपालः ॥ २५ ॥

किं च ।

न हारे नाहारे न च वनविहारे न च हरे
न शस्त्रे नो शास्त्रे न परिचरणे नापि च रणे ।
मनागप्यासङ्गं कलयति कदाचिच्चिरभव-
द्भवत्पादाम्भोजाकलनकुतुकोत्कं मम मनः ॥ २६ ॥

अपि च ।

अवति भवति विश्वं क्रीडतो वीतचिन्तं
मम मनसि कदापि क्वापि केनापि नापि ।
पदमिह कलुषेण प्रायशस्त्वाधयो मां
विदधति दुरवस्थं संप्रतीमे प्रतीपाः ॥ २७ ॥

तथा हि ।

एकेनानेककामान्कलयितुमनसा याचितः प्रागदित्या
सद्यस्तुष्टेन सृष्टस्त्रिभुवनसुभगंभावुकः कश्यपेन ।
शच्या रुच्यास्पदं यो व्यरचि तरुवरोऽदायि दानं वधूभि-
र्देवानां पुण्यकारुण्यव्रतचरणविधौ पारिजातोऽभिजातः ॥ २८ ॥

श्रुत्वैतद्भ्रातृपत्न्यस्तव चिरममराधीश काङ्क्षन्ति वृक्षं
कर्तुं पुण्यव्रतं तत्कतिचन दिवसान्द्वारवत्यामुपेत्य ।
सत्याया निर्मिमाणः सुरपुरमजिरं राजतां पारिजात-
स्तात प्रातः किलाथ व्रतचरणविधेः स्वर्गमभ्येतु भूयः ॥ २९ ॥

अपरमपि तथा तथा यतेथाः स मयि दयेत् यथा ददेत वृक्षम् ।
अहमिह परिभाव्यपौरुषं ते मुनिवर दूत्यविधौ नियोजयामि' ॥ ३० ॥

नारदस्तु तदाकर्ण्य सद्यः सितसुधाधोरलिधवलितगदाधरकलेवरो नासाग्रविनिविष्टदृष्टिः क्षणमनुध्यायन्किंचिदाधूतमूर्धा विमनायमान इव वासुदेवमिदमवादीत्—

'अयि केशिनिषूदन व्रजेयं कथयेयं तव वाचिकं मघोने ।
तदपीह विधेयसिद्ध्यसिद्धी मनसि स्वे विमृशाथ संदिशाशु ॥ ३१ ॥
महतामहताशिषां परस्मात्फलसिद्धिर्यदि नाधिकः प्रकर्षः ।
अथ मर्म भिनत्त्यसिद्धिपक्षे मरणादप्यतिदारुणोऽपकर्षः ॥ ३२ ॥
अवयन्नरिदन्तिदन्तकुन्तक्षतवक्षःकिणसंक्ष्णुताशनिं तम् ।
कथमर्थयितुं रथाङ्गपाणे सुरराजं तरुमीहसे हृदापि ॥ ३३ ॥
अमुमर्थितवान्पुरा पुरारिः किल गौरीपरितोषणाय यत्नात् ।
अनुनीय शचीकृते गिरीशं समरक्षि द्युतरुः पुरंदरेण ॥ ३४ ॥
सबलः स बलस्य निग्रहीता बलदेवानुज जातु पारिजातम् ।
अनुलोमतमं पुलोमजायास्तव नो दास्यति जीवनिर्विशेषम् ॥ ३५ ॥
तदिदं प्रथमं प्रथावतस्ते प्रथताद्धन्त न लाघवं मघोनः ।
समुपक्षिप पङ्कजाक्ष साक्षान्न सहस्राक्षमहो विपक्षपक्षे' ॥ ३६ ॥

अथ वासुदेवोऽपि तत्कालतरल इव कलहमुनेः सुनासीरगौरवादरसमृद्धानि समिध्यमानापमानसूचिताभिमानवैश्वानराणि सविनयोपहासलेशपेशलानि वचनानि निःशेषमवगत्याभ्याशवर्तिसत्यभामासौहित्योपहिताम[1]हितापिताकरीमापातमधुरां विधुरपरिपाकां गिरमुदाजहार—

'न जहार हरः सुरेन्द्रपत्न्याः प्रियमेतं यदि नाम पारिजातम् ।
उचितं तु तदस्य भूतभर्तुः स किल ज्येष्ठतमः सुरासुराणाम् ॥ ३७ ॥
अहिहन्तुरहं तु यत्कनीयाननहंकारपरोऽपरोपितारिः ।
सदयं स जयन्तवन्ममोच्चैस्तदयं लालनमर्हतीह कर्तुम् ॥ ३८ ॥
प्रभवन्विषमेक्षणः शचीच्छामनुरुन्धन्यमुदास्त तं महेन्द्रः ।
न कथं तरुमेव याचमानाः स्ववधूय स्ववधूरपत्रपेत ॥ ३९ ॥
स भवान्बहुधा दधातु यत्नं तरुरत्ने स्तनयित्नुवाहनाग्रे ।
वितरिष्यति सोऽपि मे हितैषी न सपत्नं सहसा स मां विदध्यात् ॥४०॥
सत्याः पुरस्तात्कृतमप्यसत्याकृत्याद्य वृक्षाहरणं दिवस्तत् ।
सत्यप्रतिज्ञत्वभवं त्रिलोक्यां यशो यशोदाङ्गभुवोऽवसीदेत् ॥ ४१ ॥
न चेदयं दास्यति याच्यमानो विमानया नः प्रभुताभिमानात् ।
तदा गदा मेऽद्य गदाग्रजस्य सद्यः समानेष्यति पारिजातम् ॥ ४२ ॥
न देवदैत्या न च सिद्धसाध्या न यक्षरक्षांसि मम क्षमन्ते ।
विहन्तुमाज्ञामिह हन्तु किं तु संकोचयत्यत्र गुरोर्विरोधः ॥ ४३ ॥
व्रज मुनिवर नाकं मन्त्रयेन्द्रेण साकं
शमय विषमपाकं वैरमस्माकमुद्यत् ।
यदपरमुचितं स्यादत्र गोत्रप्रहर्त्रे
तदुपदिश महर्षे वेत्सि नो तारतम्यम्' ॥ ४४ ॥
गिरमिति मुरहन्तुस्तामुदारां निशम्य
प्रणयविनयशौर्यक्रौर्यसद्भावगर्भाम् ।
कलहमुनिरथोच्चैरासनादुच्चचाल
द्विजपतिरिव पूर्वक्ष्माधरादम्बरान्तः ॥ ४५ ॥

---

१. अहितापि शक्रः.

वैरिस्वैररणे परोपकरणे लोकापदां वारणे
सद्धर्माचरणे बुधानुसरणे यः क्ष्माभृतां दीक्षितः ।
तस्यादेशवशान्नरोत्तमविभोः कृष्णस्य सन्निर्मिता-
वुच्छ्वासः किल पारिजातहरणे जातस्तृतीयः शुभः ॥ ४६ ॥

---

चतुर्थ उच्छ्वासः ।

अथ नारदोऽप्यमरपुरपरिसरसरणिमनुसरन्सरभससमुपनतानतसुरसिद्धविद्याधरकिंनरनिकरच्चिरविरचितपरिचर्योपचारपरम्परापराभूयमानयानवेगो विमानयानैः सरभसमपसरद्भिरभितो विर्तीर्णपद्यः सद्यः समुद्यताह्निकानेकमहर्षिविततकुशकुसुमतिलशबलपुलिनसमृद्धां सिद्धाङ्गनाकुचकलशकुङ्कुमाङ्गरागपङ्कपिञ्जरितनीरपूरोच्छलच्छटाछलादखिलभुवनवलयकलुषचुलुकनाय प्रतिक्षणोत्क्षिप्तजिह्वासहस्रैरिव क्वचिद्विविधमधुगन्धलोभमिलदलिकुलाकुलितललितकमलमालावलीतरलसलिलभङ्गिरिङ्गणोज्जृम्भमाणमोक्षलक्ष्मीकटाक्षभङ्गरङ्गैरिव तरङ्गैः समुद्भासितपरिसरां गीर्वाणतरङ्गिणीमुपस्पृश्य त्रिदशपरिषदमुपाससाद । तत्र च परिनृत्यत्सुरतरुणीसहस्रे सगर्वगन्धर्वमेलकालपितपञ्चमोद्गीतगीतप्रबन्धबन्धुरे धमधमायमानमधुरमुरजे विविधविकीर्णनन्दनोद्यानसमुद्भूतकुसुमामोदमोदितमधुरमधुकरपटलगुञ्जानिनादमञ्जुले निखिलभुवनसमुद्घोष्यमाणजयजयारवे पुरहरमहोत्सवे दत्तावधानं विबुधपरिषन्मध्यमध्यासीनं सुनासीरमद्राक्षीत् ।

क्रमेण चातिक्रान्ते त्रिपुरान्तकाराधनसमारम्भे सभाजितेषु द्विजातिषु विसर्जितेषु देवर्षिसिद्धविद्याधरप्रभृतिषु स्वसदस्यैर्द्वित्रैर्मित्रैः समुपास्यमानं देवराजमुपाजगाम ।

शतक्रतुरपि ब्रह्मिष्ठं ब्रह्मसूनुमभ्यागतं विभाव्य सद्यः ससंभ्रममभ्युत्थाय प्रश्रयातिशयशालिना मौलिना विकटमुकुटशिखरशिखोल्लिखितचरणनखप्रेङ्खन्मयूखं प्रणम्य निजासन्नोच्चासने कुशान्तरिते समुपविष्टं मधुपर्कादिभिरपनीतवर्त्मखेदं प्रीतमना मनाङ्मनसानुचिन्त्य प्रियालापगोष्ठीरन्वतिष्ठत्—'भगवन्नम्भोजसंभवोद्भव,

---

१. दत्तमार्गः.

के देशाः कान्यरण्यानि के शैलाः के तपोधनाः ।
के पुण्यभाजः सम्राजस्त्वयातिथ्येन सत्कृताः ॥ १ ॥
किमद्राक्षीः किमप्राक्षीः किमश्रौषी ऋषीश्वर ।
अपूर्वं पूर्वदेवेषु देवेष्यन्येषु वा नृषु' ॥ २ ॥

नारदस्तु तदाकर्ण्य 'कथं प्रस्तुतमेवेन्द्रेण, यदस्माभिः प्रस्तावनीयम्' इत्यभिसंदधानः सविस्तरं पारिजातप्रसूनजातवृत्तान्तं सत्यभामाभामान्तमावेदयन्वासुदेववाचिकमवादीत्—

'इन्द्रोपेन्द्रः प्रणमनमतिप्रीतिपूर्वं तु पूर्वं
संदिश्य त्वां कुशल कुशलप्रश्नमाशु प्रयुज्य ।
कंसध्वंसी शतमखमथो वाचिकेनाययाच-
द्यद्देवेश प्रणयविनयोपेतमेतन्निबोध ॥ ३ ॥

त्वत्तो लब्धं प्रसूनं यददित स मुनिर्भीष्मजायै तदद्य
श्रुत्वा सा सत्यभामा समजनि सहसान्वर्थनामा तदर्थम् ।
त्वत्तः संभाव्यलभ्यं तरुमपि तदिह प्रातिभाव्यं समर्थ्य
ग्रन्थिं प्रामूमुचं तद्धृदि निहितमहं हन्त मानग्रहस्य ॥ ४ ॥

अदितिरदित यस्मिन्कश्यपं पश्य बद्धा
निधिपतिमपि ऋद्धी रोहिणी चापि चन्द्रम् ।
अपि च किल शची त्वां मोचितं निष्क्रयेण
द्रुममिममिदमर्थं याचतेऽद्य स्नुषा ते ॥ ५ ॥

अहमपि तव वध्वा तत्र बद्धा वितीर्ण-
स्त्वमिव तु कलयेयं विक्रयं निष्क्रयेण ।
समनुभवतु सापि त्वत्प्रसादादिहापि
त्रिदशभवनभोगांस्त्वत्प्रियानिर्विशेषान् ॥ ६ ॥

तनुजवदनुजस्ते लालनीयोऽस्मि शश्व-
त्परिचरणपरात्मा विक्रमश्लाघनीयः ।
सुरतरुमनुरुध्य प्रार्थ्यमानं वधूभि-
र्न खलु समुचितं ते तत्र वैमुख्यरौक्ष्यम्' ॥ ७ ॥

जम्भारिरपि निजानुजानुस्मरणमसृणमना मनागार्भ(?)वत्सदयहृदयानुक्षणक्षणक्षरत्स्नेहरसद्रवैरिवाश्रुशिशिरनीरशीकरैरलंकृतनयनकमलसहस्रः क्षणं विचिन्त्य विरञ्चितनुसंभवं प्रत्युवाच—

'मुनिवर परमः प्रियंकरस्त्वं नृहरिकथासुधयासिचो यतो माम् ।
स्मरति मम चिरात्पुरा मुरारिर्विषयरसैर्विषमैर्वशीकृतात्मा ॥ ८ ॥

तमनु(?) मनुजरूपं मेऽनुजन्मानमित्थं
कथय कुशलपृच्छापूर्वमुर्वीं प्रयातः ।
उचितमयमयाचत्पारिजातं द्युजातं
यदिह स वसुजातं सर्वमर्हत्युपेन्द्रः ॥ ९ ॥

स्वयमिह हि पुराणः पूरुषो विश्वभर्ता-
भजत मदनुजत्वं गौरवं वर्धयन्मे ।
स किल सकललोकाधीशिता मामयाच-
द्यदि किमधिकमन्यज्जीविताद्यन्न दद्याम् ॥ १० ॥

मुनिवर परमेतत्तत्र चित्रं करोति
त्रिभुवनजनसीमां संविधायात्मनैव ।
कथमिव स विदग्धो मुग्धनारीगिरा मा-
मखिलभुवनसाक्षी भङ्कुमादेक्ष्यतीति ॥ ११ ॥

स्वर्लोकसारान्विभवैरुदारानगण्यपुण्योपचयावरेयान्(?) ।
अमर्त्यभोग्यान्स वितीर्य मर्त्ये नरामराणां नियतिं भनक्ति ॥ १२ ॥

मुनेऽमुनेत्थं भुवि दिव्यभोगैः संभाविते हन्त जने चिराय कः ।
पराङ्मुखः स्वर्गसुखे मखेच्छां करोतु कल्पावधि नो धिनोतु कः ॥१३॥

याते भुवं संप्रति पारिजाते जातेऽद्य नामान्तरिते द्युलोके ।
पुरेव को देवपुरेऽनुरंस्यते प्रियापि मामद्य तृणाय मंस्यते ॥ १४ ॥

निवर्त्य मर्त्येष्ववतारकार्यमार्यं सभार्यं तमिहोपयातम् ।
संभावयिष्यामि सुरोपचारैः सभाजनाभाजनमात्मबन्धुम् ॥ १५ ॥

चित्राणि वस्त्राण्यनणीयसो मणींश्चिरत्नरत्नानि निजं गजं हयम् ।
दास्येऽपरं चापि परं मुरारये न हापयिष्ये तु तरुं भुवं दिवः ॥ १६ ॥

मुने न किं वेत्ति भवान्प्रियायै भवोऽन्वभूत्प्रार्थ्य तरुं पराभवम् ।
सुदुर्लभं वस्तु समीहमाना न किं महान्तोऽपि वृथा प्रयान्ति' ॥१७॥

नारदस्तु तदाकर्ण्य सस्मितमिदमाचचक्षे—'भगवन्नमरनिकरमौलिमाल्य, यथार्थमाह भवान् । न परं त्वद्य तवाज्ञा(?) ।

एतच्चान्याश्चाख्यमाख्यायिकास्ते न्यायप्राया भ्रातुरग्रे किलाहम् ।
मानाध्म...तः पारिजाता...रे दुर्मोच्योऽस्य त्वाग्रहग्रन्थिबन्धः ॥ १८ ॥
देवाधीश प्रायशः कामचारं निर्दाक्षिण्यं निर्घृणं निर्विवेकम् ।
द्विष्टात्मीयं पूरुषं संविधत्ते नूनं स्वल्पोऽपीश्वरत्वाभिमानः ॥ १९ ॥
पृष्टोऽपृष्टो वापि शिष्टो निजेष्टं ब्रूयात्तथ्यं पथ्यमित्यामनन्ति ।
तत्त्वां वच्मि स्वस्तरुं प्रेषयास्मै यावत्कोपो नास्पृशत्तस्य चेतः ॥ २० ॥
क्षोणीं वृक्षं विश्वनेता स नेता देवानेतान्धीरचेतावजेता ।
नूनं जिष्णोऽवव्यभव्ये तदस्मिन्मा स्माकस्मात्सद्यशस्तेऽवसीदेत् ॥२१॥
अनाख्येयमप्येतदाख्यामि सद्यो यथाधोक्षजो वाचिकं ते जगाद ।
सुखोदर्कमापाततिक्तं विविच्य प्रवक्तुं प्रभुभ्यो हिता नोद्विजन्ते ॥ २२ ॥
न दाता बिडौजा यदा पारिजातं तदा मे गदा द्यावदातावदाता(?) ।
शचीचन्दनालेपविक्षोभदक्षं वलक्षं यशोभिः सहस्राक्षवक्षः ॥ २३ ॥
न देवा न दैत्या न सिद्धा न साध्या न यक्षा न रक्षांसि नागा न नागाः[1] ।
न वा किंनरा वा नरा वानरा वा मदीयां प्रतिज्ञां क्षमन्ते विहन्तुम् ॥२४॥
यथेत्थं प्रकृत्यासि धीरोऽपि वीरो बभाषे बभासे तथात्याहितं मे ।
नियोद्धा विरोद्धावुधानुग्रधामा स मानी समानीयतां नारिपक्षम्' ॥ २५ ॥
इति व्याहरन्तं तमव्याहताज्ञः स्फुटं वृत्रशत्रुर्मुनिं व्याजहार ।
रुषारक्तनेत्रव्रजव्याजहारस्रजा पूजयन्वृत्रशस्त्रप्रहारान् ॥ २६ ॥
न मे विस्मयोऽनेन लोकेशयोने स्मयोऽनेकधा यद्यधाय्यच्युतेन ।
स्ववाचालमाबालगोपालसिद्धो निसर्गप्रसिद्धोऽस्य वाचालभावः ॥ २७ ॥
समर्पणात्पालनलालनार्थात्पित्रोरथाज्ञाग्रहगौरवाच्च ।
स्नेहादृजुत्वादपि चाग्रजत्वादागांसि भूयांसि सहेऽस्य भूयः ॥ २८ ॥

---

१. न–अगाः.

सरस्यदः पाण्डवसारथिर्भवन्नखण्डधारं घनचण्डमण्डलम् ।
आखण्डलोद्योजितमाशु खण्डयन्स खाण्डवाग्निं ज्वलयिष्यति क्षणात् ॥२९॥
सरस्यदो मद्विमुखे व्रजेत्से (?) वृष्ट्या मया विप्लवमानिनीषिते ।
तत्रान्तरायं सहसान्तरा यं प्रोद्धृत्य गोवर्धनमाचरिष्यति ॥ ३० ॥
सरस्यदो वृत्रवधे सहायः स्वयं मयामायमयं पुरार्थितः ।
उपेक्षमाणो यदहं समानः सर्वेषु भूतेष्विति मां वदिष्यति ॥ ३१ ॥
यद्वास्तवोऽप्यात्मगुणः स्तुतः स्वयं महाजनानां विरुणद्धि धर्मम् ।
तथापि लब्धेऽवसरे नियन्त्रितुं शक्या रसज्ञा न कदापि कैश्चित् ॥ ३२ ॥
धिगस्तु तृष्णां विषयेषु कृष्णो जिष्णुं गुरुं भ्रातरमात्मतत्परम् ।
स्त्रिया जितः कामवशोऽवशात्मा मुनेऽशृणोस्त्वं यदधिक्षिपत्यसौ ॥ ३३ ॥
यदि हृदि स गदां मे मोक्तुमिच्छत्यवश्यं
तदलमिह विलम्बेनैतु संनह्य शौरिः ।
प्रहरतु मयि पूर्वं सर्वशस्त्रैस्ततोऽहं
यदि सहजदया मां विक्लवं नो करोति ॥ ३४ ॥
व्रज व्रजावर्जनदक्ष....मं वदावदं तं वद संगरादृते ।
न मायया नो दयया न या....मत्तोऽद्य पत्रार्धमपीह लप्स्यसे' ॥ ३५ ॥

नारदस्तु तदाकर्ण्य 'देव संक्रन्दन, नैतदात्मनीनमामन्त्रयसे । परवशा हि खलु संप्रति ते रोषावेशस्य बुद्धिः, न दूरदर्शिनी । अवश्यभाविनी चार्थेऽलं तवाप्यत्याग्रहेण, यदवजानासि प्राकृतमिव मनुष्यमात्रमेनम् । किं न जानासि तव मातुरदितेस्तपःप्रभावात्प्रसन्नं वैष्णवं ज्योतिरात्मनावतीर्णं त्वत्प्रीतयेऽनुजत्वं प्रपेदे । देवपक्षपातेन चामरवैरिणो निहन्तुमात्मना महीमवततार । तदस्तु स्वस्ति देवेभ्यः । संपालय त्रिदशालयम् । लालयात्मजान् । शीलय स्वर्गभोगान् । भ्रातृणामन्योन्यभेदो हि न श्रेयसे । किं न पश्यसि ज्ञातिभेदादामूलमुन्मूलितं शितिकण्ठपालितमपि लङ्केश्वरम् । तन्निवर्तस्व दुर्विपाकादस्मादारम्भात्' इत्यवादीत् । अथ 'मुने, जानाम्ये-

१. 'अभिज्ञावचने लृट्'.

नमेवंप्रभवमुदात्तहृदयम् । अत एवाल्पकेन पारिजातेन हेतुना महाप्रभावो भगवान्भ्रात्रा ज्यायसा न विरोत्स्यते । तद्गच्छ । आवेद्यतां द्वारकाधीशो मद्वाचिकम्' इतीन्द्रेण विसृष्टः स्रष्टुः सुतः समेत्य वासुदेवाय सर्वमिदमावेदयांचक्रे । सोऽप्यशेषमिदमाकलय्य मनसोपहूतं गरुडमारूढः प्रद्युम्नसात्यकिसनाथेनान्तरिक्षगामिना रथेनानुगम्यमानो विमानयानवर्त्मावजगाहे । ततश्च

अनिमिषपुरमीयुषा निमेषादथ मिषतां द्विषतां खगेश्वरेण ।
समगमि वसुदेवनन्दनस्तं तरुमधिनन्दनमेष पारिजातम् ॥ ३६ ॥

विविधविबुधयोधैरुद्यदुद्दामशस्त्रैः
प्रतिपथमथ रुद्धं कल्पवृक्षोपरुद्धम् ।
अचिरमुदमुमूलत्पारिजातं द्युजातं
यश इव बलभर्तुर्मूर्तमुच्चैः प्ररूढम् ॥ ३७ ॥

तनुमतनुमवस्थितं विधाय द्युतरुममुं परिसान्त्व्य भीतमेषः ।
खगपतिमधिरोप्य संप्रतस्थे दिवमभिमण्डलयन्प्रदक्षिणेन ॥ ३८ ॥

वियति विहगवेगाद्धीरधारायमाणै-
र्विततकनकपक्षोत्क्षिप्तभासां वितानैः[1] ।
सुरपुरमनुचक्रे तत्र बाणासुरीयां
पुरमनलकलापाक्रान्तदिक्चक्रवालाम् ॥ ३९ ॥

सपदि विपिनपाला विस्मयत्रासभाजः
किमिह महदकस्मादेतदौत्पातिकं नः ।
हरति भुवनरत्नं प्राकृतः कोऽप्ययत्ना-
दिति चकितमुपेत्य द्राङ्मघोने शशंसुः ॥ ४० ॥

सपदि समुदभूदभूतपूर्वः सुरनरकिंनरसिद्धचारणानाम् ।
वियति कलकलः स कोऽपि कृष्णं प्रसभमभिद्रवतां तरुं हरन्तम् ॥ ४१ ॥

वैरिस्वैररणे परोपकरणे लोकापदां वारणे
सद्धर्माचरणे बुधानुसरणे यः क्ष्माभृतां दीक्षितः ।

---

१. कुङ्कुमद्रवतुल्यैः.

तस्यादेशवशान्नरोत्तमविभोः कृष्णस्य सन्निर्मिता-
वुच्छ्वासः किल पारिजातहरणे तुर्यः स धुर्यप्रियः ॥ ४२ ॥

---

पञ्चम उच्छ्वासः ।

अथोद्यानपालव्रजान्नाकपालः समाकर्ण्य कृष्णं तरुं तं हरन्तम् ।
विचक्राम चक्रायुधेनाभियोद्धुं भृशं तत्वरे तत्त्वरेः प्रेक्ष्य रौक्ष्यम् ।
जयन्तं जयन्तं विपक्षाननेकान्सहादाय साहायकाय प्रतस्थे ।
समारुह्य चैरावणं वृत्रशत्रुः पुरद्वारि च द्वारकेशं ददर्श ॥ २ ॥
स कृष्णं प्रति प्राह तुष्टो न शिष्टोपजुष्टो 'हरे सेवितः सैष पन्थाः ।
यदस्मान्विमत्याविजित्यापि कान्तानुरोधान्ममाचूचुरः पारिजातम् ॥ ३ ॥
अशेषस्य विश्वस्य भर्तुः प्रहर्तुर्द्विषां भ्रातुरीड्यस्य विस्रम्भिणो मे ।
अयं राजसर्वस्वचौर्यापहारो न ते भूयसे श्रेयसे नायुषे च ॥ ४ ॥
चल्लवीवल्लभोल्लासयन्मल्लतां तुल्यपल्लीजने हारिहल्लीसकः[1] ।
अप्यपात्रं भवन्नित्यभोगेष्वहो देवसेव्यं कथं वृक्षमाकाङ्क्षसि ॥ ५ ॥

यदि हृदि परमास्ते शूरवंशाभिमानः
किमिति समिति शूरंमन्य तन्मामजित्वा ।
तमपहरसि चौरंकारमारावितोऽपि[2]
प्रकटय सुभटत्वं मा स्म भोः कातरोऽभूः ॥ ६ ॥

गृहाण शस्त्रं विगृहाण जिष्णुना गदाभिघातैर्निगृहाण वक्षसि ।
वचो निजं चानुगृहाण शाखिना सार्धं गृहांश्चाथ निजान्गमिष्यसि ॥७॥
इति क्रुधा विस्फुरिताधरेण गदाधरो वज्रधरेण तेन ।
प्रोक्तः प्रतिप्राह हसन्प्रणम्य तं प्रश्रयानम्रतरेण मूर्ध्ना ॥ ८ ॥
भवद्वधूटीकरणीयपुण्यकव्रतावताराय तरुं नयामि ।
न तेऽत्र जिष्णोरसहिष्णुतोचिता नालोचिता धर्मनियोजकस्य ॥ ९ ॥
यन्मां रणायाह्वयसे महेन्द्र कथं गुरोस्ते सुशकोऽभियोगः ।
किं तु त्वदाज्ञानतिवर्तनाय प्रवर्तये संगररङ्गकेलीः' ॥ १० ॥

---

१. हल्लीसकं रासनाम्ना प्रसिद्धं स्त्रीनां मण्डलिकानृत्तम्. २. चौरंकारं चौरशब्द-मुच्चार्य.

इति गिरं स गृणन्गरुडासनो बलभिदो बिभिदे करिणं शरैः ।
हरिहयोऽप्यथ विष्णुरथं रुषा भृशमपीडयदाशु तमाशुगैः ॥ ११ ॥

रुन्धानावितरेतरं गुरुतरैः शस्त्रैरथास्त्रैः शितै-
श्छिन्दानौ धनुषी ध्वजं प्रहरणान्यन्योन्यमेकैकशः ।
भिन्दानौ च परस्परं तनुमनु प्रोद्यद्दयाविक्लवा-
विन्धानौ निजतेजसा समहतां शार्दूलविक्रीडितौ ॥ १२ ॥

घनतरघनघोषभीषणेन प्रतिनदद्द्रिदरीविदारकेण ।
अमुहदिह मुहुर्मुहुस्त्रिलोकी हरिधनुषो गुरुणा गुरुणारवेण ॥ १३ ॥

क्षुभ्यत्क्षोणि विदीर्यदद्रि निपतत्तारावलि प्रज्वल-
द्दम्भोलि ध्वनदुद्धतोदधि चलच्चण्डांशुशीतद्युति ।
कुप्यत्पत्रिपति त्रसत्सुरतति स्विद्यद्द्युलीलावति
स्पर्धेद्धं मुरवैरिभूधरभिदोर्युद्धं तदाभून्महत् ॥ १४ ॥

व्यासक्तं हरिमवलोक्य शक्रसूनुर्दुद्राव द्रुतममरद्रुमं हरिष्यन् ।
रक्षन्तं तमथ चिराय रौक्मिणेयं तीक्ष्णाग्रैरभियुयुजे भुजे शरौघैः ॥ १५ ॥
प्रद्युम्नोऽप्यथ विशिखैरवाकिरत्तं तं चास्त्रैः प्रसभमथावतस्तरेऽन्यः ।
प्रत्यस्त्रं प्रतिविधिमाशु संदधानौ तेनाते युधि कुशलत्वमैन्द्रिकार्ष्णी ॥ १६ ॥

विचकार शरान्शरासनं तद्यदलक्ष्यानधिलक्ष्यमाशु लक्ष्म् ।
न तदद्भुतमस्य लब्धकोटिद्वितयो राजति चेद्गुणो गरीयान् ॥ १७ ॥
समरः समभूदभूतपूर्वः सुचिरेणानिधनावहस्तयोः सः ।
यमुदीक्ष्य दधुर्विमानवाहा[1] निजबाहाबलगर्वखर्वणानि[2] ॥ १८ ॥
अथ वासवभूरतिक्रमिष्यन्हरिसूनुं तपसा तमुग्रमस्त्रम् ।
समधत्त धनुष्यधृष्यतेजःस्फुरदुल्काशतदीपितान्तरिक्षम् ॥ १९ ॥
क्षुधितोग्रकरालकालजिह्वानिवहाह्वायकमापतत्तदस्त्रम् ।
क्षयकालघनाघनातिघोरैर्घनघोषैर्बधिरीचकार विश्वम् ॥ २० ॥

अथ सत्वरमेतदित्वरं तरसा शम्बरवैरितेजसा ।
हतवीर्यमुपेत्य मन्थरं रथमेवास्य बलाद्जिज्वलत् ॥ २१ ॥

---

१. देवाः.　२. निजभुजबलगर्वसंकोचम्.

ज्वलतोऽथ रथान्नभो निपत्य प्रहसन्भानुनिभो विभोस्तनूजः ।
अवदद्वदतां वरो वरौजाः स जयन्तं द्विषतं सदा जयन्तम् ॥ २२ ॥
'अपि दर्शय सर्वशस्त्रविद्याभ्यसनोच्चव्यसनोपयोगमद्य ।
परिदह्य नु मायिकं रथं मे ननु मा स्म स्मयथा वृथास्तशस्त्रः ॥ २३ ॥
कुतुकं महदेव तन्ममासीद्भवदस्त्रागमकौशलं निशम्य ।
विदितोऽसि तदद्य धेहि धैर्यं न किमद्यापि समावृतोऽस्त्रशस्त्रान्' ॥ २४ ॥
तदरुंतुदवाक्शरप्रहारैस्त्रिदशेशप्रभवो यथा व्यथिष्ट ।
न तथायमयोमयास्त्रवर्षैरचिकित्स्यं हृदि वाङ्मयं हि शल्यम् ॥ २५ ॥
अजनि जनिजुषां भयंकरं प्रतिकृतसंकृतशस्त्रसंकरम् ।
अविरतशरसंचरत्करं प्रधनमतीव विलुप्तभास्करम् ॥ २६ ॥
प्रवरःप्रवरः प्रभाविणामथ शक्रस्य सखा द्विजोत्तमः ।
सहसोपससाद सादरं समरायामरपादपाशया ॥ २७ ॥
समुपस्थितमाततायिनं शिनिपौत्रोऽथ निहन्तुमीहमानः ।
'अयि मारय मा निवारणामुं' द्विजमित्थं जगदे गदाग्रजेन ॥ २८ ॥
प्रवरस्य च सात्यकेस्तदाभूदतुलं तत्तुमुलं यशोनुकूलम् ।
शरजर्जरितेतरेतराङ्गक्षरदुष्णक्षतजोक्षितक्षमाङ्कम् ॥ २९ ॥
अवधीरितजीवितव्यतृष्णौ शरधीभूततनू अनूनवीर्यौ ।
यदुविप्रवरौ लघुक्रियौ तौ रुरुधाते किल रोदसी शरौघैः ॥ ३० ॥
विशिखैः परिविध्यतोऽस्य चापं शिनिपौत्रः स्वशरैस्त्रिभिश्चकर्त ।
अपरैस्तमरुंतुदैरनेकैस्तिलशः संतुतुदे प्रतिप्रतीकम् ॥ ३१ ॥
प्रवरोऽप्यथ सात्यकेर्धनुर्ज्यां विशिखैरच्छिनदुच्चकर्त चाङ्गम् ।
धनुरन्यदुपाददानमेनं गदयासावदयान्तरो जघान ॥ ३२ ॥
अथ सोऽप्यचिरेण लब्धसंज्ञस्तमधावद्विधृतासिचर्मवर्मा ।
प्रवरः परिहृत्य तत्प्रहारं हृदि विव्याध रुषा तमात्मशक्त्या ॥ ३३ ॥
विकलं कलयञ्शिनेः स पौत्रं तरुमाहर्तुमुपाजगाम तार्क्ष्यम् ।
सरथंतमथो विधूतपक्षानिलविक्षोभजवान्निरास्थदुच्चैः ॥ ३४ ॥

---

१. तथा–अयं–अयोमय(लोहमय)–अस्त्रवर्षैः. २. सात्यकिः.

उपसृत्य सत्वरमथाक्रमं हरी हरिविक्रमौ भृशममू विमूर्छितौ ।
परिरभ्य निर्भरमुभौ यथोचितं प्रतिचक्रतुः सपदि तीव्रवेदनौ ॥ ३५ ॥

श्रान्तं रणेन सुचिरेण निरीक्ष्य पुत्रं
मित्रं च विश्रमयितुं विनिवेश्य पार्श्वे ।
भूयो मृधं विदधतुर्विविधं हरीन्द्रा-
वालोकिनाकिकुलमाकुलतां नयन्तौ ॥ ३६ ॥

तत्रोल्लसद्भुजगभोजिविधूतपक्ष-
विक्षोभजानिलजवात्परिधीयमानम् ।
शक्रप्रयुक्तशरचक्रजचक्रवालं
चक्रायुधस्य सहसावरणत्वमाप ॥ ३७ ॥

ऐरावणोऽथ रभसादभिपत्य पत्या
नुंत्तस्तुतोद पददन्तकरेण तार्क्ष्यम् ।
तार्क्ष्योऽपि तं क्रकचचण्डिमचञ्चुचञ्चू-
संचारणैरपि खरैर्नखरप्रहारैः ॥ ३८ ॥

आस्फोटनैर्विकटपक्षपुटाभिघातै-
र्झम्पानिपातमभिपत्य चपेटपातैः ।
चञ्चुप्रतोदकरजावकिरैः करीन्द्रं
पारीन्द्रवत्स विददार विहंगराजः ॥ ३९ ॥

भूरिक्षरद्रुधिरधोरणिधौतविश्वः
फुल्लत्पलाशधरभूधरशृङ्गशोभः ।
भ्रश्यन्नधश्चपलचीत्कृति पारियात्रे
तेनाचिराद्विचकरे च करेणुराजः ॥ ४० ॥

तस्मिन्गिरावनुनिपत्य हरी करीन्द्रं
स्वस्थीभवन्तमसुमन्तमवैक्षिषाताम् ।
भूयोऽधिभूधरमभूदथ विष्णुजिष्ण्वो-
स्तद्दारुणप्रहरणाभरणो रणोऽसौ ॥ ४१ ॥

१. प्रेरितः. २. पारीन्द्रः सिंहः. ३. पर्वतविशेषे.

स गिरिर्गुरुसंगरे विमर्दादविशत्क्ष्मामथ शाणपादतुल्यः(?) ।
अनिवार्यमनार्यमार्यवैरं स्वयमालोक्य विलीयते हि साधुः ॥ ४२ ॥
मदनः[1] सदनं रथाय पित्रा प्रहितोऽसौ सहितोऽथ दारुकेण[2] ।
सहसोपजगाम कामरूपः सरथस्तं किल पारियात्रदेशम् ॥ ४३ ॥
अथ पतगपतेर्नभोविभागे रुचिरशरीररुचां चयैर्विभाति ।
असहन इव तं निकारमारात्परिपतति स पयोनिधौ पतङ्गः ॥ ४४ ॥

अपि च ।

त्रिभुवनभरभङ्गारम्भसंभाव्यशक्त्योः
समरममरलोकातङ्कशङ्काकरं तम् ।
कथयितुमिव सून्वोस्तप्यते कश्यपाय
द्रुततरमथ सिन्धुं लोकबन्धुर्विवेश ॥ ४५ ॥
मन्दाक्षमन्दमुकुलन्नयनारविन्द-
मम्भोजिनीभिरभितोऽभिनिरीक्ष्यमाणः ।
व्यस्तांशुकोऽस्तगिरिमस्तकतः पपात
क्षीबः स्खलन्निव तमः प्रविशन्दिनेशः ॥ ४६ ॥
वियदपगतरोचिर्मन्दमम्भोजवृन्दं
हतगतिरपि पान्थः कोकलोकः सशोकः ।
गतवति परलोकं लोकबन्धौ महान्धौ[3]
पतितमिव तमोऽन्धं प्राविशज्जीवजातम् ॥ ४७ ॥
कोकीनिःश्वासधूमः स्मरकरटिघटारात्रिनीलीनिचोलं
संध्यावह्नेरलातं बहिरिव विसरन्मानिनीमानजालम् ।
मीलत्पद्मालिमाला पथिककुलवधूमूर्छितं स्वैरिणीनां
स्रोतः सिद्धाञ्जनस्य प्रसरति सहसा सान्द्रबन्धं तमोऽन्धम् ॥ ४८ ॥

अपि च ।

कर्षन्हर्षातिरेकादधरमथ दिशां ध्वान्तनीलीनिचोलं
कुर्वन्विद्राणनिद्राः सपदि कुमुदिनी रञ्जयन्पौरहूतीम् ।

---

१. प्रद्युम्नः. २. दारुकः श्रीकृष्णसारथिः. ३. महति कूपे.

चुम्बन्नुच्चैश्चकोरीवदनमपि करैर्मुद्रयन्नब्जिनीनां
नेत्राम्भोजानि भानौ प्रवसति रभसादिन्दुराविर्बभूव ॥ ४९ ॥

कैरैरिव परामृशन्कुमुदिनीं वियोगार्दितां
सृजन्निव दिगङ्गनाकुचतटीपटीरस्नुतिम् ।
किरन्निव यशः सितं जगति दृष्टिदानार्जितं
हसन्निव मनस्विनीस्तुहिनभानुरुज्जृम्भते ॥ ५० ॥

एवमुदयति सकललोकलोचनानन्दसंदोहनिःष्यन्दे श्वेताद्वैतमापादयति कुमुदिनीपतौ विरमत्यपरव्यापारपारवश्ये निःशेषितोचितसकलसांध्यविधिर्वासुदेवो, देवगुरूपवर्णिततनूजविग्रहाग्रहवैशसः सलिलराशिरोधस्यनुबद्धतपस्यः कश्यपश्च स्वे स्वे सद्मनि सममेव भगवन्तं भवानीवल्लभमस्ताविष्टाम् । ततश्च विविधैर्वेधैः स्तोत्रप्रबन्धैरभिष्टुतो न चिरादेव देवदेवः प्रीतमनाः स्वयमुपेत्य ताविच्छातिशायिवरप्रदानैरभिवर्धयांचक्रे । अत्र चान्तरे

अथ सुरगुरुणा निवेदितौ द्रागदितिमरीचिसुतौ सुतौ निषेद्धुम् ।
सुरमुनिसहितौ हितं त्रिलोक्या रचयितुमीयतुराशु पारियात्रम् ॥ ५१ ॥
अधिरजनि चिराय तत्र चित्राः स्वपरकथा विरचय्य तौ तनूजौ ।
नयविनयहिता हितोपदेशैः समरपराङ्मुखतां शनैरनैष्टाम् ॥ ५२ ॥

अथ विलुलिततारा मन्दचन्द्रप्रचारा
विरतरतविहारा लुप्तगुप्ताभिसारा ।
विरहविकलवामा भामिनीत्यक्तभामा
रजनिरजनि यामायामिनी यातयामा ॥ ५३ ॥

ततश्च ।

पीतः कैरवकोरकैरवचितश्चञ्चच्चकोरीचयैः
क्रोधाताम्रमनुद्रुतारुणकराकृष्टापसृष्टांशुकः ।
शप्तः पान्थवधूभिरुज्झितरुचिः श्रान्तो निशान्तोत्सवैराकृष्टः कुलटाकुलैर्द्विजपतिः प्राप्यापतद्वारुणीम् ॥ ५४ ॥

---

१. मानवतीः. २. मरीचिसुतः कश्यपः. ३. कृष्णेन्द्रौ.

किं च ।

उच्छ्वासैरथ चक्रयारुपचिता(?) विश्लेक्ष्यमाणाङ्गना-
निःश्वासैरतिसान्द्रिता विरहिणीप्राणैरुपष्टम्भिताः ।
वारस्त्रीवदनारविन्दमदिरामोदातिमेदस्विनः
स्वेदाम्भःकणतस्कराः परिववुर्वैभातिका वायवः ॥ ५५ ॥

क्रमेण च

उदयगिरिमुरोजं रञ्जयन्पौरहूत्याः
स्वयमरुणकराग्रैरेष काश्मीररागैः ।
उदगमदथ कोकप्राणनिर्याणविघ्नः
परिणतकुरुविन्दामन्दकान्तिर्दिनेशः ॥ ५६ ॥

अपि च ।

कमलमुकुलकुम्भोज्जृम्भिरज्यत्पराग-
प्रचुरमधुरसौघैः स्नापितः पद्मिनीभिः ।
गगनमभिवहद्भिः पिच्छिलं तैरिवासौ
यदुपसरति मन्दं मन्दमम्भोजबन्धुः ॥ ५७ ॥

निर्वर्त्य कृत्यमथ सांध्यमुवाच तातः
प्राप्तः सुतौ ननु कुतोऽद्य युधं व्यधत्तम् ।
गर्ह्यादनर्थफलकात्कलहात्स्वगृह्या-
दस्माद्गिरा विरमतं कुरुतं मतं नौ ॥ ५८ ॥

संभाव्य एष भवतो भगवान्यवीयां-
ल्लीलाकलेवरधरः पुरुषः पुराणः ।
यद्भ्रूविभङ्गमनुरुध्य विधातृमुख्या
विख्यापयन्त्यधिकृता विविधाधिकारान् ॥ ५९ ॥

देवः स एष नरवेषधरो धराया-
मस्मत्तपः परवशोऽवरजस्तवास्ते ।

संमानयैनमिदमीय[1]विभूतिभोगै-
स्तन्मा नय क्रुधममुं न विमानयावाम् ॥ ६० ॥
दारान्पुरातिचरतो भवतो महर्षे-
रेष स्वतः परिभवो विधिनैव दृष्टः ।
तत्पुत्र वृत्रजयजङ्गमकीर्तिमूर्ते
द्विक्षः स्वगोत्रमिह मा हृदि मावरुक्षः ॥ ६१ ॥
प्रापय्य शक्रतरुमेष हरिः पुरीं स्वां
प्रत्यर्पयिष्यति पुनर्भवते जवेन ।
सौभ्रात्रमस्तु युवयोः सवयोभिरामं
भामं जहीतमहितं न हतं हितं नः ॥ ६२ ॥

इति जनकगिरा चिरान्निषिद्धौ गुरु गुरुसान्त्वनमेव मानयन्तौ ।
सपितृमुनिसुरं सपारिजातं पुरमथ जग्मतुरच्युताधिदैवम् ॥ ६३ ॥

ततश्च ।

सुरविजयसमेतं स्वप्रतिज्ञातमेतं
मधुमथनमुपेतं पारिजातेन सार्धम् ।
सपदि समवगत्य प्रत्यगारं गरीयः
किमपि नगरनार्यश्चक्रिरे मङ्गलानि ॥ ६४ ॥

तथा हि ।

जगुर्नगरयोषितः प्रननृतुश्च वाराङ्गना
गणाश्च वणिजां निजापणपथानलंचक्रिरे ।
विरेणुरचिरेण सन्मुरजवेणुवीणानका
न का मलयजद्रवैरिह विरेणुरासीत्स्थली ॥ ६५ ॥

ततश्च ।

सितसुभगकपोला लोलसस्नेहतारा
सपदि फलितकामा सत्यभामाभिरामा ।
सहकुलसुभगाभिर्दीप्ररत्नप्रदीपै-
रकृत सुकृतकीर्तेस्तस्य नीराजनं सा ॥ ६६ ॥

---

1. एतदीयविभूतिभोगैः.

अमरमुनिसमाजे तत्र सात्राजिती सा
गुरुभिरथ नियुक्ता नारदायार्चयित्वा ।
अदित विदितपुण्ये पुण्यके पारिजातं
विधिवदखिलभर्त्रा वासुदेवेन सार्धम् ॥ ६७ ॥

आत्मारामेऽभिरामे विरचितकुहनाविग्रहे निग्रहीत-
र्युन्मार्गप्रस्थितानां त्रिभुवनशरणे भक्तगृह्ये वितीर्णे ।
सानन्दं पुष्पवृन्दैः सपदि सुरपुरान्नन्दनीयैर्निपेते
नेदे वाद्यैरथाद्यैः सुरमुनिमनुजैस्तुष्टुवे साधुवादैः ॥ ६८ ॥

जयजयजयवादैर्वेणुवीणानिनादै-
र्नगरयुवतिगीतैः शान्तिघोषैर्द्विजानाम् ।
अशनवसनभूषापुष्पवर्षादिभिस्त-
त्पुरमजनि जनानामुत्सवायोत्सवानाम् ॥ ६९ ॥

तन्निष्क्रयाय भुवनान्यनलं विचिन्त्य
सान्तःपुराः सुरनरोरगकश्यपाद्याः ।
प्रासीसदन्स्तुतिशतैर्मुनिमीश्वरं च
प्रामूमुचन्नखिलबन्धविमोक्षदक्षम् ॥ ७० ॥

तं सत्यासखमृषयोऽथ कश्यपाद्या मङ्गल्यैश्चिरमभिषिच्य तीर्थतोयैः ।
आशीर्भिर्भृशमखिलागमोदिताभिः सत्याभिर्हरिमभिवर्धयांबभूवुः ॥ ७१ ॥

चिरमथ परितोष्य कश्यपादीन्व्यसृजददूरमनुव्रजन्विनीतः ।
तरुमपि सुचिराद्विसृज्य नाकं मधुमथनः कलयांचकार कामान् ॥ ७२ ॥

वैरिस्वैररणे परोपकरणे लोकापदां वारणे
सद्धर्माचरणे बुधानुसरणे यः क्ष्माभृतां दीक्षितः ।
तस्यादेशवशान्नरोत्तमविभोः कृष्णस्य सन्निर्मिता-
वुच्छ्वासः किल पारिजातहरणे पूर्णोऽभवत्पञ्चमः ॥ ७३ ॥

इति [श्री]मन्महाराजाधिराजश्रीमन्नरोत्तमादिष्टशेषनरसिंहसूरिसूनु-
कृष्णविरचिता पारिजात[हरण]चम्पूः संपूर्णा ।

# पारिजातहरणश्लोकानां सूची ।

